एवञ्च । "पञ्चच्छन्दा आवाप आर्भव पवमान सप्तसामा" इत्येतद्विवरणार्थेषु—"गायत्रसंहिते गायत्रे तृचे भवत श्यावाश्वान्धी गवे आनुष्टुभे तृचे उष्णिहि सफ पौष्कल ककुभि कावमन्त्य जगतीषु" इत्येतेषु—श्यावाश्वान्धीगवयो पूर्व्वानुष्टुबुत्तरे गायत्री श्रुते। तत्र किं तास्वेव प्रग्रथन विनैव च तृचगान उत प्रग्रथनेन इति चिन्तायाम्

पूर्व्वत्र लक्षणा विनैव तृचत्वसामानाधिकरण्येन बृहतीच्छन्दस्कत्वोपपत्तावपि एकस्या एवोत्तराया पाठेन तृचगानानुपपत्त्युक्त प्रग्रथन। प्रकृते तु उत्तरात्रयस्याऽपि पाठात् तृचगानोपपत्ते प्रग्रथने प्रमाणाभाव इति प्राप्ते—

* प्रमाणान्तराभावेऽपि प्रगायश्रवणमात्रयोरेव प्रमाणत्वात् प्रग्रथन। तच्च न पूर्व्ववद्द्विरावृत्त्या। अपि तु अन्त्यान्त्यपादस्य सकृदावृत्त्यैव तावता तृचस्य अनुष्टुप्त्वोपपत्ते। अष्टाक्षरेण हि पादेन अन्विता गायत्री द्वात्रिंशदक्षरा अनुष्टुब्भवति। अतएव वचनादपि चैव प्रग्रथनम्।

लिङ्गञ्च "चतुर्व्विंशतिजगत्यस्तृतीयसवनमेका च ककुप" इति प्रग्रथनएवोपपद्यते। तथा हि तृतीयसवने स्तोत्रद्वय सप्तदश आर्भव पवमान एकविंशञ्च अग्निष्टोमस्तोत्र। आद्ये आद्यसाम्नो षड्गायत्र्य तास्तिस्रोजगत्य अष्टचत्वारिंशदक्षरात्मिका। तत स्तुतीयचतुर्थसाम्नो षडनुष्टुभ तायतस्रोजगत्य। पञ्चमषष्ठसाम्नोरुष्णिक्ककुभ द्वे ऋचौ अष्टाविंशत्यक्षर मेका जगती अष्टौ अक्षराणि अवशिष्यन्ते। सप्तमे साम्नि तिस्रोजगत्योऽग्निष्टोमस्तोत्रे

* प्रमाणाभावान्तरेऽपि इति पाठान्तर।

तथात्वे "पादं पुनरारभते" इत्यस्य वैयर्थ्यापत्तेः ककुप्पदं एव गौणं अङ्गीकृत्य उत्तरोद्देशेन ककुप्त्वविधानात्—तयोरेव प्रथनेन ककुप्त्वसम्पादनम्। एवं वैदिकानां—बार्हत्प्रागाथसमाख्या उत्तरायन्ते पङ्क्तिः पाठश्च उपपन्नो भवति, तृचत्वोपपत्तिः सामान्य विधित्वात् तथाऽनुपपन्नाऽपि न दुष्यति। प्रग्रथने च आद्यां बृहतीं सकृत् पठित्वा अस्या अन्त्यपादेन सह द्वितीयाया अर्धं च पठित्वा तदन्त्यपादेन सह तृतीयाख्यावपठनरूपं बोध्यम्। तेन द्वितीया ककुप् अष्टाविंशत्यक्षरैव। आद्यायाः समविंशत्यक्षरत्वेऽपि अल्पा-न्तरत्वान्न दोषः।८।२।६।

एवं वा॥ ज्योतिष्टोम एव माध्यन्दिनपवमाने "त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चमास" इति श्रुतं। तदर्थं विवरणानि च "गायत्रामहीयवे गायत्रे तृचे भवतः रौरवयौधाजये-बार्हते तृचे* भवत औशनसमन्त्यं त्रिष्टुप्स्वि"ति अत्र रौरवयौधा-जययोः† पूर्वा बृहती उत्तरा विष्टारपङ्क्तिः समाम्नाता। तदिह विशिष्यैव बार्हते तृचे इति बार्हततृचाम्नानात् उत्तरे द्वे बृहती-च्छन्दस्के एव समानेतव्ये इति प्राप्ते—

नाऽत्र रौरवयौधाजयोद्देशेन बार्हतविधिः योनिस्ताद्रूप्याः प्राप्तत्वात्। नाऽपि तृचाधिकरणत्वविधिः प्राप्तत्वादेव। नाऽपि बार्हततृचाधिकरणत्वविधिः विशिष्टस्याऽव्युत्पन्नत्वात्। अतएव न विशिष्टोद्देशेन सामद्वयविधिः। तृचोद्देशेन बृहतीच्छन्दस्कत्वविधिः

---

* तृचे भवत इति पाठान्तरम्।

† यौधाजययोरिति पाठान्तरम्।

प्रथयनेन इति सिद्धान्तः। प्रथमं च रौरवादिवद्दहिराहृत्य बोध्यम्। एवञ्च पञ्चसु मासु वार्हता प्रगाथा आम्यन्त इति लिङ्गमुपपद्यते।

यद्यपि सत्यपि ब्रह्मसामस्तोत्रावान्तरप्रकरणे त्रय प्रगाथा न ब्राह्मणाच्छंसिस्तोत्रा अपितु दृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतु वाम्यत्रयाना इति वाक्यादवान्तरप्रकरणं बाधित्वा ज्योतिष्टोमात्मक प्रथमदिनस्यस्तोत्रान्तरत्वेव निविशन्ते भाष्यकारलिखनात्।

छन्दोगसूत्रानुसारात्तु चतुस्त्रिंशत्स्तोमक द्वितीयदिनस्य स्तोत्रा न्तरत्वेव। तत्राऽपि पवमाने रथन्तरस्य प्रगाथ। त्वोत् पृष्ठे बृहत। अच्छावाकस्य पृष्ठे कालेयस्याब च बोध्यम्।

एवमुक्तवचनादेव इन्द्रक्रतुप्रगाथेऽपि उत्तरस्मिन् सर्व्वस्मिन् पक्षेऽपि एतस्य ब्रह्मसामस्तोत्रत्वत्वेऽपि तदभीवर्त्तसामाभावात् अभी वर्त्तादन्यस्यामा इति वचनाथा न विरुध्यते। अवशिष्टा शत प्रगाथान्तश्च शतस्यक्षो भाष्यकारलिखनात्। प्रथमदिनीयब्रह्म सामस्तोत्रे। परन्तु भाष्यकारीय गौधमग्रहणं गौधसस्थानक वाह्मणाच्छंसिस्तोत्रोपलक्षणार्थम्।

वस्तुतस्तस्य दृहत्सामकपृष्ठवत्त्वेन श्येतस्यैव प्रसक्तौ गौधम प्रसक्त्यभावात् गवामयने अभीवर्त्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च। छन्दोगसूत्रानुसारात्तु द्वितीयदिनीयब्रह्मसामस्तोत्रे शतस्यक प्रगाथो बोध्य। अवशिष्टा नवनवतिप्रगाथा ये पञ्चसु मासेषु यावन्तोऽभिप्लवा तेषां प्रतिषडह तृतीयदिनयज्ञे प्रतिमास विंशत्यहानि पञ्चसु मासेषु शतं तेषु उत्तमवर्ज्जं नवनवतिप्रगाथा इन्द्रदेवत्या बृहतीच्छन्दस्काय समाम्यन्त। षडहतृतीयेषु उत्तमे

यौधाजययोः षड्बृहत्यः* औशनसमामनः तिस्रस्त्रिष्टुभः। होतुः पृष्ठे पञ्चबृहत्योद्वादश ककुभः। त्रिष्टुतिप्रकारे तथैवाऽऽम्नानेन तृचस्य तावद्वारं ग्राह्यामात्। मैत्रावरुणपृष्ठे सप्तदश गायत्र्यः ब्राह्मणाच्छंस्यच्छावाकपृष्ठयोरपि सप्तदश सप्तदश बृहत्य एवैकादृचाभ्यासेन। एवंच पञ्चचत्वारिंशद्बृहत्यो मुख्याः एषां गायत्रीणां चतुर्विंशत्यक्षराणां त्रिपादानां मध्ये चतसृणां गायत्रीणां द्वादशभिरष्टाक्षरैः पादैः सहिता द्वादश पूर्वोक्ता अष्टाविंशत्यक्षराः ककुभो द्वादश षट्त्रिंशदक्षरात्मिका बृहत्यो भवन्ति। तदेवं सप्तपञ्चाशद्बृहत्यः ता आसां† पञ्च गायत्रीणां मध्ये अवशिष्टाभ्यां द्वाभ्यां सह सप्तदशभिर्गायत्रीभिरेकैकेन पादेन मिलिताः सप्तपञ्चाशद्बृहत्यः चतुश्चत्वारिंशदक्षरात्मिकाः सप्तपञ्चाशत्त्रिष्टुभो भवन्ति एवमाद्याभिस्तिसृभिः त्रिष्टुब्भिः षष्टिस्त्रिष्टुभः। तदेतल्लिङ्गं प्रपञ्चनएवोपपद्यते। अन्यथा पवमाने अन्यासां बृहतीनां होतुः पृष्ठे च अन्यासां ककुभां दाशतयीभ्य. समानयने षष्टिसंख्यानुपपत्तेः। अथ हि न त्रिष्टुभो माध्यन्दिनं सवनमिति यथाश्रुतं सामानाधिकरण्ये उपपद्यते बाधात्। अतो जघन्यं माध्यन्दिनसवनपदमेवं लक्षणामङ्गीकृत्य माध्यन्दिनसवनाङ्गभूता—याः सामवेदे समाम्नातास्ताः षष्टिरित्यर्थोऽवगतेर्दाशतयीभ्यः समानयने लिङ्गानुपपत्तिरित्युक्तम्।

'तत्र लक्षणायाश्चावश्यकत्वे लाघवान्माध्यन्दिनसवनस्तोत्रीयाणां एव लक्षणा तत आम्नातानामपि तत्त्वोपपत्तेरुपेक्षितम्। ८। २। ६।

* औशनसमामनस्त्रिष्टुभ, इति पाठान्तरम्।

† एषामिति पाठान्तरं।

इति वचनेन तन्निरासात्। अतः पादप्रग्रथनमेवेति सिद्धं। इयञ्च लिङ्गानुपपत्तिर्भाष्यकारलिखनानुसारात् प्रकरणे एतावत् संख्याक-ऋक्पाठमङ्गीकृत्य। यदा "चतुःशतमैन्द्रावार्हताः प्रागाथा दाशतयीषु" इति कल्पसूत्रकारवचनात् दाशतयीभ्यः समानयनम्, तदा पूर्व्वपक्षिणोऽपि चतुःशत * ऋचामेव समानयनोपपत्तेः लिङ्गोपपत्तिरविकलैव इति प्रागाथपदादेव प्रग्रथनम्। ८। २। ६।

अर्थैकत्वात्॥ सामवेदशाखाभेदेन एकस्यैव स्वरसमूहात्मकस्य साम्नःपारोक्षावरोहादिभेदेन प्रकारभेदा आम्नाताः। एकस्यैव रागस्य देशभेदेन प्रकारभेदवत्। तेषाञ्च प्रकाराणां एकगीत्यर्थत्वात् षोडशिग्रहणादिवद्विकल्प. सिद्धएव प्रसङ्गात् आर्य्यते। ८। २.७।

अर्थैकत्वात्॥ विकृतिविशेषे कानिचित् प्राकृतानि स्तोत्राणि विहितानि, तेषु च यूपावटस्तरणबर्हिन्यायेन † न प्राकृतानां रथन्तरादिसाम्नां ऋचां वा प्राप्तिः प्राकृतस्तोत्रविशेषेष्वेव तेषां निबद्धत्वात्। तत्प्रकरणे चेदं श्रुतं "यद्वाचास्तुवते तदसुरा अन्ववायन् यत् साम्नास्तुवते तदसुरा नान्ववायन् तस्माद् य एवं विद्वान् साम्ना स्तुवीत" इति।

तत्र ऋक्शब्दोऽप्रगीतऋक्परः प्रगीतायाः सामविधिनैव प्राप्तेः। नहि ऋगाश्रयत्वं विना साम्नः स्तोत्रसाधनता सम्भवति। स्तोभानामर्थशून्यत्वेन तदाश्रितऋक्साम्नां गुणाभिधानरूपस्तोत्रसाध्यत्वासंभवात्। अतस्तत्र प्रगीताप्रगीतयोर्विकल्पेन स्तोत्र साधनता उत प्रगीताया एवेति चिन्तायाम् –

---

* चतु शत इति पाठान्तरम्।

† बर्हिन्यायेन इति क्वचित् पाठः।

च प्रग्रथनपूर्व्वकाभ्यासे सप्तबृहत्यश्चतुर्द्दश ककुभः। तत्र सप्त बृहत्यः षड् जगत्यः द्वादशाक्षराणि अवशिष्यन्ते। चतुर्द्दशानाञ्च ककुभां षष्टी जगत्यः। षष्टौ* अष्टाक्षराण्येव अवशिष्यन्ते † तदेव चतुर्विंशति र्जगत्योऽवशिष्टाक्षरैश्च मिलितैरेका ककुप्।

तदिदं प्रग्रथनएवोपपद्यते, नतु यथाश्रुतगायत्रीपाठे अल्पा-क्षरत्वापत्तेः। तस्मादपि प्रग्रथनम्।

यत्तु भाष्यकारेण पूर्व्वपदद्वयोर्वाऽनुष्टुभोः समासयन् प्रग्रथनं वा इति चिन्तितम्। तत् पौनरुक्त्यापत्तेरुपेक्षितं।

यद्यपि तन्त्ररत्नादौ लिङ्गान्तरप्रदर्शनार्थं पक्षान्तरमित्युक्तं तदपि भाष्योक्तविचारि लिङ्गानुपपत्तेः पूर्व्वपर्णोक्त एव प्रदर्शितत्वाद-युक्तम्। ८।२।६।

एवं वा ॥ गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके षड्रोति-षतं पूर्व्वः ‡ पक्षः तथोत्तर मध्ये विषुवान्। तत्र पूर्व्वस्मिन् पक्षेऽभिप्रायणीयं प्रथममहः चतुर्व्विंशं द्वितीयं चत्वारोऽभिप्लवाः षडहा एकः पृष्ठ्यः षडहः समासः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः चयोऽभिप्लवा एकाहः अयः स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामह्नोभ्यां सह षडमासाः गवामयनप्रकरणे तन्त्रमासस्तोत्रा-संवत्सरप्रकरणे च चतुःशतमेन्द्रावहिताः प्रगाथाः इत्युक्तं। तत्र-निस्तृषु ऋतु-गानं उत द्वयोः प्रग्रथनेन इति चिन्तायां प्रागाथस्मरणात्

---

* क्वचित् पुस्तके षष्टी इति न दृश्यते।

† अष्टाक्षराण्येव शिष्यन्ते इति क्वचित् पाठः।

‡ पूर्व्व इति पाठान्तरम्।

सुपात्तं न च प्रकरणे च ऋच पठिता न वा प्रकृतोदाहरणवत् सामविधिः, तत्र स्तोत्रविध्यन्यथानुपपत्त्या ऋचामानयनेऽपि साम्नामानयने प्रमाणाभावः। अथ तत्र प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तोत्रतया स्तोत्रविध्यन्यथानुपपत्त्यैव सामानयनं तत्रोऽत्रापि तत एव सामप्राप्ते "साम्ना स्तुवीत" इति विधिवैयर्थ्यापत्तेरिति चेत्। साम्ना स्तुवीत इत्यस्य अनारभ्याधीतत्वेन प्रकृतावानर्थक्येनाऽनिवेशे सर्व्वमेव विकृतौ अप्राकृतस्तोत्रविषये सामविधायकत्वोपपत्तेः।

भाष्यकारादिलिखनस्वारस्यादस्य विकृतिविशेषप्रकरणे पठितत्वाङ्गीकारे तु नाऽत्र वस्तुतः सामविधिरपि तु स्तोत्रपदशक्तिग्राहक-याज्ञिकप्रसिद्ध्युपोद्बलकः सन्ननुवाद एव अप्राकृतस्तोत्रविधिस्तुत्यर्थं एकत्वविधानार्थो वा इति ध्येयम्। एतदक्षरसादेव वर्णकान्तरम्।—

क्वचित् कर्म्मविशेषे "अथ महस्समानव" इति इय ऋक् प्रगीता अप्रगीता च पठिता। पुनश्च "अथ महस्समानव इत्येतया आहवनीयमुपतिष्ठते" इत्यनेन विनियुक्ता सा। द्विविधाया पठितत्वात् द्विविधाऽपि विकल्पेन विनियुज्यते इति प्राप्ते—अप्रगीताया प्रमाणाय एव पाठः। अज्ञानमधारितस्वरूपाया सुखं गानं अर्थावशेषो वा सम्भवति। प्रगीतत्वेनाऽभ्यार्थो प्रयोजनमपेक्षमाणा उपस्थाने विनियुज्यते इति नैव ग्राह्या। योऽपि अप्रगीताया एव शाखान्तरे पाठः सोऽपि तत्पुरुषान् प्रति ऋक्स्वरूपज्ञानाय एव इति न शाखान्तरीयप्रगाथाख्यसंस्कारविरोधः। ९। २। ६।

एवं वा॥ साममन्त्रप्रसङ्गात् ऋग्यजुर्मन्त्रयोः स्वरश्चिन्त्यते। ते हि क्वचिदुदात्तानुदात्तस्वरितप्रचयरूपचातुःस्वर्य्येण अधीताः।

च मातोवार्हतानां तृचानामाम्नानात्। अतएव तान्येकविंशति-दिनानि षष्ठमासस्य चाऽऽद्यानि द्वादश इत्येवंत्रयस्त्रिंशत् मातोवार्हता सूचा इति वाक्येन तेषु सतोबृहतीनां विधानं। एवञ्च पञ्चमास-पर्यन्त पृष्ठ्यषडहेषु अपि सतोबृहतीनां विधानं भाष्यकारलिखना-दवगन्तव्यम्। शेषेषु त्वहःसु विशेषवचनाभावे तिसृणां उष्णिहां त्रिभिर्गायत्रोपादैः संयोगेन बृहतीत्रयसम्पादनम्। ननु क्वाऽपि बृहमासस्तोत्रे प्रगाथः।

तदेतत् पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते इति लिङ्गं द्वयोः प्रग्रथने उपपद्यते नतु तृचगाने क्रियमाणे भाष्यलिख-नात्। अष्टोत्तरशतद्वयसंख्याकानामृचां पञ्चप्रगाथसम्पादकद्विक न्यूनत्वादष्टनवत्यधिकशतावशिष्टानां षट्षष्टिस्तृचा भवन्ति। तैच समाधिकेषु मासेषु समाप्येरन्।

तथा हि पूर्वोक्तरीत्या प्रतिमास दशदिनानां सतोबृहतोच्छन्द-स्कत्वाद्विंशतिदिनानि अवशिष्टानि तानि मासत्रयेण षष्टिः सम्पाद्यन्ते। अवशिष्टानि षट् चतुर्थमासस्याऽभिप्लवतोयवर्णं उपादेयानीति समाधिकेषु त्रिषुमासेषु समाप्तिःस्यात्। यदा तु तुल्यन्यायत्वात् पञ्चस्वपि प्रगाथेषु च गानं तदा पञ्चदशानामृचां न्यूनत्वात् अवशिष्टास्त्रिनवतिशत ऋचः, तासां तृचास्तु एकषष्टिरेकाच ऋगिति मासाधिके त्रिभिर्मासैस्तृचसमाप्तावपि एका ऋगवशिष्यते इति तद्वैयर्थ्यञ्च। तथ्याऽलिङ्गानुपपत्तिः प्रगाथशब्दानुपपत्तिश्च।

नचैकं तृचं पठित्वाऽन्यासृचं पुनरुपादाय अपिमत्रक् प्रग्रथनमेव किं न स्यात् इति वाच्य "अन्या अन्या ऋचोभवन्ति"

पुनर्निर्णायकत्वं * तस्य च कादाचित्कत्वेऽपि मन्त्रनैयत्यवदेव स्वरनैयत्योपपत्तिः । मन्त्रोच्चारणवदेव स्वरोच्चारणमिहेनं स्वरानुसन्धानमात्रेण निर्णयकाशङ्का ।

तदेवं द्विविध. स्वरस्य क्रतूपयोगः प्रकरणादिना सिध्येत् । तत्र च विशेषरूपेण स्मृत्या यज्ञप्रयोगे तानस्वरविधायिकया † बाधात् सामान्यरूपस्य प्रकरणादेः प्रयोगबहिर्भूतार्थनिर्णयोपयोगित्वविषयतैव कल्प्यते । प्रयोगमध्ये विस्मरणादौ तु स्वरानुसन्धानेनैव पर्यविशेषस्मरणम् ।

अत च तानस्य पर्यविशेषोपयोगाभावेन अदृष्टार्थत्वेऽपि एकमन्त्रवृत्तित्वादेव वैस्वर्यादिदोषाभावः । इतरथा गुणानुरोधेन मन्त्रावृत्त्यापत्ते । अजपेत्यादिना तानपर्युदासाच्च जपादौ वैस्वर्यादिप्रसिप्रसवः । जपा जपतिचोदनाचोदिता मन्त्राः न्यूङ्खाः शस्त्रेषु मन्त्रविशेषाः । ८ । २ । ६ ।

॥ सामप्रदेशे ॥ एवं सामोहोपद्‌घात सप्रसङ्गं निरूप्य अधुना सामोहो निरूप्यते । "कवतीषु रथन्तरं गायति" "यद्योन्यां गायति तदुत्तरयो"रित्यादौ यत्र सामातिदेशः तत्र साम्न. स्वरगणाभिव्यक्त्यर्थत्वाद् यत्र स्थाने योनौ एकाराद्यक्षरसंस्कारिका पार्ईभावादिरूपा गीतिः श्रुता, तत्र स्थानान्तरे यत्रैवैकारपाठ उत्तरादौ तत्रैव पार्ईभावरूपा गीतिरूहितव्या । ननु प्रकृतस्थानपठिताक्षरान्तरं कर्तव्या तत्र गीतिस्तदक्षराभिव्यञ्जकत्वासम्भवेन आरादुपकारकत्व-

---

* निर्णायकता इति क्वचित् पाठ ।

† स्वरविधायकया इति क्वचित् पाठ ।

अन्तिमस्य आम्नातस्य यच्छब्दोपकृतत्वेन सामविधायकत्वा-भावाद् द्वयोरेवाऽप्राप्तार्थत्वादिना लिङ्त्वमियचाद्वक्सान्नो * रुभयो-रपि विधिः। अर्थाच्च तुल्यकार्यत्वविकल्पः। नचाऽसुरागमनेन ऋचो निन्दितत्वात् कथं तद्विधिः निषेधैकवाक्यतां विना निन्दात्वस्यैवाऽ प्रतीतेः। अतोऽन्यत्तुरायाध्यानां अपि ऋचा वशीकरणादिध्यैक वाक्यतया अस्य स्तुतित्वमेव इति प्राप्ते—

वाक्यभेदनियमशिष्टविकल्पादिदोषभिया यच्छब्दोपदृष्टस्याऽपि लिङ एव मानविधायकत्वं। नतु लट्त्वेन सन्दिग्धयोः। एवं च साम्न एव इयं सर्व्वा स्तुतिः। ऋङ्निन्दाऽपि "न हि निन्दा" न्यायेन विधेयसामस्तुत्यर्थं वा इति तस्याः प्रगीतताया एव साधनत्वं। [illegible] वाऽधिकरणं —यत्र स्तोत्रान्तरप्रकरणे—साम तद्योनिरुत्तराच न पठिता तद्विषयम्। इतरत्र साम्नो ऋचो च प्रकरणादिनैव यच्छ-ब्दोपपत्तेः सामविधिवैयर्थ्यात्।

अतएव प्रकृतोदाहरणे—साम्नेति एकवचनोपादानात् एकमेव साम सामवेदादानेयम्। ऋक् च तत्र योनिरूपैव। "एक साम तृचे क्रियते वद्ध्योभ्यां गायति" इत्यादेर्वीणायावाङ्नियम न्यायेन प्राकृततत्तत्स्तोत्रीयर्चामेवोद्देशेन अप्राकृती अप्रहृत्ते। क्रतु-गत प्राकृतवत् स्तोमत्वादिगुणानुरोधात् तु एकस्या एव प्रगीताया ऋचः तावद्वारमभ्यासः।

नचैवं यत्र प्राकृतस्तोत्रावान्तरप्रकरणे योनिरुत्तरा च आम्नाता तयोस्तरयोः भावि प्रमाणाभावः। यत्र च संज्ञादिभिर्न स्तोत्रान्तर-

---

* ऋक् सामयोरिति क्वचित् पाठः।

तत्रावशिष्टगीते लोपो यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्या-
पत्तिरित्यायाद्यमानमपि न दुष्यति । ८ । २ । ७ ।

॥ स्तोभस्यैके ॥ साम्नः कश्चिदंशऋगक्षराधिरूढः कश्चिच्च
स्तोभाक्षराधिरूढः । प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव । तत्र
सामातिदेशे स्तोभानामप्यतिदेशो भवेन्नवेति चिन्तायां साम्न ऋग-
क्षराभिव्यञ्जयत्ववत् स्तोभाक्षराभिव्यञ्जयत्वस्य तुल्यत्वाद् गुणानु-
रोधेन प्रधानभूतानां ऋचामिव स्तोभानामपि माऽतिदेशः । न च
स्तोभानां प्रायशोऽनर्थकत्वात् स्तोत्रसाधनत्वासम्भवेन नित्यप्रयोजनानां
प्राधान्यानुपपत्तेर्गीतिकालपरिच्छेदकत्वेन गोत्वङ्गत्वासदतिदेशे
चातिदेशोपपत्तिरिति वाच्य । अग्निष्टपतीत्यादिमायत्ररीत्ना-
स्तोभाक्षराणां ऋगेकवाक्यत्वासम्भवेऽपि स्वातन्त्र्येणैव गुणाभि-
धानरूपस्तोत्रकारणत्वसम्भवेन ऋग्वादेवप्राधान्योपपत्तेः येषामपि
हुंफड़ादि स्तोभाक्षराणामर्थशून्यत्वं तत्राऽपि तदुच्चारणस्यादृष्टद्वारानु
ष्ठानमादेश्यात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोत्राङ्गत्वमेव वेति न
सामाङ्गत्वकल्पनावसरः । नच साम्नोवादृष्टार्थत्वं स्तोभानां वेत्यत्र
नियामकाभावः । साम्नोऽंशे बदृष्टार्थत्वसंशे चदृष्टार्थत्वमित्येवं-
विधवैरूप्यापत्तेरेव नियामकत्वादिति प्राप्ते यज्ञायज्ञीयेन स्तुवीते-
त्यादौ तत्र तत्र साम्ना सामान्यतो विशेषतश्च विनियोगस्यैव नियाम-
कत्वेन सामोच्चारणस्यैव तदंशेऽदृष्टार्थत्वं स्तोभानां त्वर्थशून्यानां
गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव अन्यथा हि साम्नःप्रकरणादि-
नैव सर्व्वस्याऽपि विवक्षितार्थत्वलाभे विनियोगविधिवैयर्थ्यापत्तिः ।
अतो विनियोगवशेन झटितिप्रयोजनलाभे द्वारभूतादृष्टस्याऽपि तत्रैव

क्वचित् तत्र प्रचयवर्ज्यं त्रैस्वर्य्येण। तत्रोभयोरपि गीतिप्रकारवद् विकल्प एव ।

न च "तानो यज्ञकर्म्मणि भजपन्यूंखसामसु" इति स्मृत्या तानस्वरस्य विहितत्वात् उभयबाध इति वाच्यं श्रौतानामध्ययनविध्यध्यापितानां स्वराणां पाठादिना तत्तत्फलपूर्व्वसाधनीभूतमन्त्रवृत्तित्वस्य प्रबलप्रमाणप्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथा "अग्निर्मूर्द्धा" इत्यादीनां स्मृत्या नवग्रहाङ्गहोमार्थे विनियोगात् क्रमादिना आग्नेयाद्यङ्गत्वानापत्तेः ।

नचैवं नवग्रहहोमाङ्गत्वानापत्तिः। सौर्य्याकाङ्क्षयैव नवग्रहहोमाकाङ्क्षयैव वाक्येन विनियोगोपपत्तेः। प्रकृते तु श्रौतस्वरविरोधात् तानस्मृतिरप्रामाण्यमेव इति प्राप्ते—

श्रौतस्य स्वरस्य अध्ययनविधिना अध्यापितस्य प्रयोजनापेक्षाया "यद्यत्कृत्कुर्यात् तत्तत् कुर्य्यात्" इत्युपबन्धेन प्रकरणादिसहकृतमन्त्रवृत्तिपाठेन च प्रयोजनद्वयमवगम्यते। एवं तावत् प्रयोगकालात् पूर्व्वमेव अर्थविशेषनिर्णायकत्वं। न च मन्त्राणां प्रयोगकाल एव अर्थस्मारकत्वात् पूर्व्वमर्थविशेषावधारणाभावेऽपि बाधकाभाव. विध्यवगतस्याऽपि अर्थविशेषस्य प्रयोगकाले मन्त्रप्रतिपाद्यत्वसन्देहे प्रयोगप्राप्त्यभावप्रसङ्गापत्तेः। अतस्तदर्थं प्रयोगाद् बहिरेव मन्त्रार्थनिर्णयार्थं—"बहुव्रीहौ प्रकृत्या पूर्व्वपदं" इत्यादिस्वरोपयोगः। अपरस्तु * पूर्व्वमवधारितस्याऽपि अर्थस्य प्रयोगमध्ये विस्मरणे

* अपरश्च इति पाठान्तरं ।

प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोग। नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा वेदोऽखिलो धर्ममूलमिति मूलपदस्य जन कत्वज्ञापकत्वोभयसाधारण्येनाऽप्युपपत्तेः। ८। २। ८।

॥ धर्मस्य ॥ तदेव विविधस्याऽप्यूहस्य प्राकृतदेवतादिस्थाना पन्न एव वैकृतदेवतादौ प्रसक्ते स्थानापत्तिरिदानीं निरूप्यते। तत्र मूले तत्कार्यकारित्वरूपा स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्व मुक्तं। यद्यपि च सर्वत्र विधिरेव स्थानापत्तौ बीजं। तथाऽपि तत्सह कारीणि पञ्चेति पञ्चविधत्वं प्रत्यक्षादनुमानाच्छ्रुतस्वशब्दात् प्रति षेधानुमितस्वशब्दादभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति। तेषाञ्चोदाहरणानि नैवारश्चरुर्भवति नीवाराणां व्रीहिकार्यकारित्व प्रत्यक्षात्। न च नैवार इति विकारार्थतद्धितरूपस्वशब्दादेवैतदिति शङ्क्यं तस्य सम्बन्धसामान्यवाचित्वेनाऽप्युपपत्तौ चरौ नीवारविकृति त्वस्य प्रत्यक्षाधीनत्वात्। तथा नखावभिन्नचरुर्भवतीत्यत्र नखानामुलू खलमुसलस्थानापन्नत्वमनुमानात्‌ नखानां हि अवघातमेव प्रत्यक्षेण कार्यमवधार्यते। उलूखलमुसलयोश्चावघात। अवघातेनावघात योरेकवितुषीभावकार्यत्वात्तत्साधनयोरपि एकवितुषीभावप्रयो जकत्वमनुमेयमेव। तथा चाग्रयणचातुर्मास्येषु परिधौ पशुं नियु ञ्जीते"ति श्रुतस्य परिधेर्यूपकार्यकारित्वं श्रुतस्वशब्दादेव नह्यत्र प्राकृतनियोजनान्तरविधिर्विशिष्टविध्यादिगौरवापत्तेः। तथा न गिरा गिरेति निषेधानुवादबलाद्गिरापदकार्यवाचि स्वशब्दानुमाने नैरापदस्य गिरापदस्थानापन्नत्वं तथा मस्थिते पड्हेमध्वाश्रये घृत त्वस्य पड्हाभावे मध्वशनविधिना पड्हप्रतिषेधमनुमाय तेन पड्ह

प्रसङ्गात्। आर्द्दभावो हि प्रकृतौ अवर्णद्वयर्णात्मकस्य सन्ध्यक्षर-स्यैकारस्य विश्लेषरूपसंस्कारार्थः। न हि एकारो नाम वर्णान्तरं प्रमाणाभावात् अपि तु स्मृतिसहकृतप्रत्यक्षेण अवर्ण इवर्णात्मक एव। अतश्च तद्विश्लेषकस्य आर्द्दभावस्य तत्स्थानपठिताक्षरान्तरविश्लेष-कत्वासम्भवात् यद्वैवोत्तरादाविकारः तद्वैव आर्द्दभावः कार्य्यः।

यद्यपि च अयं विश्लेषादिरूपः संस्कारो नाऽर्थाभिधानोपयोगि तथा दृष्टार्थस्तद्व्यतिरेकेणैव सन्ध्यक्षरेणाऽर्थाभिधानस्य ज्ञायमानत्वात्। तथाऽपि गानमहत्त्वमन्त्रजन्यगुणाभिनव्यक्त्यैव स्तावतया स्तोत्रत्व मिद्दत्यतयैवोपयुज्यते।

ननैव न विश्लेषादिरूप एव संस्कारः प्रमाणाभावात् अननु गमाच। न हि विश्लेष एव सर्व्वत्र संस्कारः "एव ऐई इत्येतानि तालव्य"मिति स्मृत्या इईकारयोरपि तालव्यत्वात् "तालव्यमाई यद्वृद्धि"मिति स्मृत्या च तथाऽपि आर्द्दभावविधानेन तत्र सन्ध्यक्षरत्वा-भावेन विश्लेषासम्भवात्। अतः सर्व्वानुगता वर्णान्तरागमेन पूर्व्वाक्षरपरिलोप एव संस्कारः स्तोत्रत्वघटकः। तस्य च एकारस्थाने स्थितवर्णान्तरेऽपि सम्भवात् नोद्दर्भिद्दिरिति वाच्यम्। तथात्वेऽपि संस्कार्य्यतावच्छेदकस्यैकारत्वस्य अक्षरान्तरेष्वभावेन तदनुपपत्तेः।

वस्तुतस्तु परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्र-साधनत्वानापत्तेर्लोपस्य क्वाऽपि संस्कारत्वादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्ध अदः।

एवञ्च प्रधानभूतोत्तरादिक्रमाक्षरानुरोधेन यत्र स्वगाक्षराल्पत्वं

भावात् सत्यपि तन्निवर्त्तकत्वे दरापदस्य नैव तत्कार्य्यापत्ति रित्युक्तमेव।

यद्यमेऽपि सत्यामपि यड्ढादिकार्य्यापत्तौ अभावे विधिनैषा ऽप्रत्यादिना तदकरणे व्यगम्यमानजन्यतया तत्कार्य्यं मध्यमना टिविधुरपपत्ते प्रतिषेधानुमानवैयर्थ्यम। यतो मूलोक्तप्रकारात् उपपत्तेरेव यास्य। यस्य पदार्थस्य येन रूपेण याहशपदाकाङ्क्षा पूरकत्व तेनैव रूपेण तस्यास्तत्भट्टाया वा भावनायास्ताहशा काङ्क्षापूरकत्व यस्य पदार्थस्य तस्य तत्पदार्थस्थानापत्तत्व। यस्ति चेद व्रह्मवर्चमादौ। स्वर्गादेर्हि येन रूपेण भाव्यत्व करणत्वादिना किमस्य भाव्य करण येत्यादिभावनाकाङ्क्षापूरकत्व प्रकृतो तेनैव रूपेण तद्भावनाभट्टायां सौर्य्यादिभावनाया व्रह्म वर्चसादिस्ताहशाकाङ्क्षापूरकत्वात् स्वर्गादिस्थानापत्तत्वमिद्धि।

सौर्य्यस्य चाऽग्नेयस्थानापत्तत्व नीवारनघ्रादोनाच किमस्य प्रदेय प्रकृतिद्रव्यत्वेतुयमाधनोभूतक्रियामाधनत्व व्रीहेनमायाकाङ्क्षापूर कत्व तेन तेन रूपेण व्रोह्मिमुखमादिवदेव समानमिति तत्स्थाना पत्तत्वमिद्धि। यडहस्य च येन रूपेण यस्यामेव भावनाया याहशा काङ्क्षापूरकत्व तस्यामेव तेन मध्यमवस्यति तस्याऽपि तत्स्थानापत्ति' कल्पाचिन्तया न विरुध्यते।

दृहगस्थानापत्तिघटकच भाव्यत्वादिक रूप यद्यथाऽवगम्यते। क्वचिदनुमानात्, क्वचिच्छक्यवगम्द्रात्, क्वचिशाचणिकात् क्वचित् प्रतिषेधानुमितात्, क्वचिदभावविध्यनुमितात्। तत्राद्योदाहरण नीवारा। अनुमानप्रकारय नोवारा प्रदेयचरुप्रकृतिभूता

झटितिकल्पना न तु स्तोभेषु स्तोत्रादिरूपपदार्थसम्बन्धकल्पनसापेक्षत्वात्। अतः स्तोभानां गीत्यङ्गत्वात्तदतिदेशेनाऽतिदेशोपपत्तेन तदंशस्य लोपाद्योऽन्यथाभावः। अर्थवत्स्तोभाक्षरेषु तु ऋगक्षरवदेव स्तोत्राद्युपयोगोपपत्तेर्गीतेरेव तदङ्गत्वमिति तु प्रतिभाति। अतएवाऽनर्थकस्तोभेषु ऋक्सत्त्वे मात्र आर्थिककर्मत्वं तदभावे तु मुख्यादृष्टार्थत्वमेव। ८। २। ७।

॥ अधिकं ॥ प्रसङ्गात् स्तोभलक्षणमुच्यते। ये ऋगक्षरेभ्य ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षरविलक्षणावर्णास्ते स्तोभाः। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि आन्द्रियान्द्रिरित्यभ्यासे ऋगक्षरविलक्षणत्वाभावादन्त्यं विशेषणम्। अग्नाइत्यादिविकारे ऋगक्षरविलक्षणत्वेऽपि आधिक्याभावादाद्यम्। वस्तुतस्तु विलक्षणत्वस्यार्थानभिधायकत्वरूपत्वे अर्थाभिधायकेषु अग्निष्टपतीत्यादि स्तोभेष्वव्याप्तेरन्यस्य च विलक्षणत्वस्य निर्वक्तुमशक्यत्वादभियुक्तानां स्तोभ इति प्रसिद्धिस्ते स्तोभाः। स्तोभत्वञ्च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न शक्यतावच्छेदकाप्रसिद्धिः। अत्र च येऽर्थवन्तः स्तोभास्तेषां ऋग्मन्त्रवदेव गुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यं गुणाभिधानस्य चाऽदृष्टार्थत्वेऽपि ज्ञानस्य स्वतःप्रमाणत्वाद्दोषाभावेन चाऽप्रामाण्यायोगात्। स्वविषयसिद्धेः प्रमात्वाविघातो ऋग्वदेवमाऽनुपपन्नः। यदि तु देवताविग्रहादिप्रसङ्गभिया तात्पर्यविषयीभूतस्यैवाऽर्थस्य सिद्धिः। प्रकृते तु अदृष्टान्तं गुणाभिधानस्य अदृष्टार्थत्वाच्च तात्पर्यकल्पना। अपि तु आहार्यज्ञानजनकत्वमेव। तदाऽस्तु पदार्थविधया प्रामाण्यं अनर्थकस्तोभाक्षरवत्। अन्यथा सर्व्वदैवमादिस्थले प्रामाण्याभावेऽपि

पत्तिस्तथाऽपि न परिधौ यूपधर्म्माः। सत्यपि परिधेः पशुनियोजनं प्रति समस्याऽङ्गत्वे पुरोडाशकपालन्यायेनाऽग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावाद्धर्म्माणाञ्चाऽपूर्व्वीयपशुनियोजनप्रयुक्ताधिकरणार्थत्वेन तदप्रयुक्ताधिकरणे परिधावसम्भवात्। न च गौरवेण प्रयुक्तत्वस्य नोद्देश्यतावच्छेदककोटिप्रवेशः। शेषत्वसाधनत्वसम्बन्धित्वाद्यपेक्षया प्रयुक्तत्वस्याऽपि तदघटितत्वेन लघुत्वात्।

किञ्च। अदृष्टघटिते यूपत्वरूपे वैयर्थ्याभावाद्धर्म्माणां छेदनादीनां युगेतृपत्त्यर्थत्वमेव सत्यपूर्व्वीयसाधनविशेषार्थत्वसाधानवत्। न च परिधौ यूपत्वमस्ति। तद्धि दृष्टादृष्टसंस्कारसमुदायो वा स्यात्तावत् संस्कारजन्यादृष्टान्तरं वा तद्विशिष्टं काष्ठं वा। सर्व्वथा परिधौ न तत्सम्भवः। परिधानप्रयुक्तधर्म्माणामपि सत्वकृत्वादीनां तत्राऽवश्यकत्वस्य वक्ष्यमाणत्वेन नोयणादीनां यूपधर्म्माणां बाधावश्यंभावेन तावत् संस्कारसमुदायासम्भवात्। नहि यूपशब्दःप्रत्येकमेकैकसंस्कारवाची अनेकशक्तिकल्पनापत्तेः। कतिपयसंस्कारयुक्ते यूपशब्दप्रयोगाभावाच्च। यूपं छिनत्तीत्यादेस्तत्तत्संस्कारेण यूपंसम्पादयेदित्यर्थाङ्गीकारेण समुदायादिवाखिलेऽप्युपपत्तेः। अन्यथा एकैकसंस्कारस्याऽपि यूपत्वे तज्जनकच्छेदनादीनां विकल्पापत्तेः। अतोयूपोत्पादकानां धर्म्माणामर्थलोपादेव परिधावसम्भव इति प्राप्ते न तावत् स्थानोपपत्त्यसम्भवः। सत्यपि नियोजनान्तरविधौ प्राकाशाध्वर्य्युदानवत् प्राकृतनियोजनकार्य्य एव तद्विधानेन तदुपपत्तेः।

वाचित्वगन्धानुमानेन पडहस्थानापन्नत्व मध्वग्रहणादे । इदञ्च भाष्यकारोक्तमपि कृत्वाचिन्तयोदाहृतमिति मन्तव्य । पडहसमाख्युत्तर तदङ्गत्वेनाऽत्र मध्वग्रहणविधानेन पडहाभावे मध्वग्रहणविधौ प्रमाणाभावात् स्थिरोदाहरणान्तर तु सम्यगित्युक्तमेव प्रतिभाति । न तावत्तत्कार्य्यकारित्व तत्स्थानापन्नत्व ब्रह्मवर्चसादिफलस्य सौर्य्यादिकरणस्य च स्वर्गाग्नेयादिकार्य्यकारित्वाभावेन स्थानापत्त्यनापत्ते । नचेष्टापत्ति । "अगन्महपथि"त्यादौ यागानुमन्त्रणादौ चोहानापत्त । "सूर्य्यस्याऽहं देवयज्यये"त्यादियागानुमन्त्रणे यज्यापदे पदान्तरप्रक्षेपरूपभाक्तोहाभावेऽपि यागान्तरपरत्वेन अन्यथाभावात्मकस्य मुख्यस्योहस्य तादवस्थ्यात् । चरुनीवारमयादीनामथान्तरकार्य्यभेदेन स्थानापत्त्यनापत्तेय तथोदाहरणान्यप्ययुक्तानि । तथा हि नीवाराणां चरुधर्म्मजनकत्वस्याऽन्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात् । न हि साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्ष सम्भवति । अलौकिकप्रत्यक्ष नखादिष्वपि तुल्य । किञ्चैव नखेष्वपि उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्ति ।

तृतीयोदाहरणेऽपि यद्यपि परिधौ पशुनियोजनसाधनत्व श्रुत, तथाऽपि नियोजनस्य यूपार्थत्व न श्रुतमिति न यूपकार्य्यकारित्वस्य श्रुतत्वशब्दगम्यता ।

चतुर्थ तु गिरापदस्याऽग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्य्य स्यैवाऽप्रासद्दर्थाभिधानमात्ररूपकार्य्यस्य च गीत्यादिधर्म्मग्राहकत्वा

इत्यन तद्विधाने वाक्यभेदात्। उच्छ्रयणादीनान्तु अग्निमग्नाग्नीध्याये नात्पत्वयूपसंस्कारकत्वादपूर्व्वसाधनीभूत पशुनियोजनाधारत्वलक्षणा वाच्यभावेनायूपे परिव्याणादावपि प्राप्त्युपपत्तिः। उच्छ्रयणमात्र पर सर्व्वलोपादिना निवर्त्तते। सचैव यूपायाऽज्यमानाये"ति मन्त्रे ऊहा पत्तिः। स्वरुमन्त्रेऽपि समानत्वात्। परिधये ऽज्यमानायेत्याद्यूह स्येष्टापत्त्यैव सुपरिहरत्वाच्च। सूत्रस्य चोहपरत्वेनाऽपि व्याख्यान सम्भवात्। ८। २। १०।

॥ पदार्थ॥ अमुदिताद्या दधिशृतयोः प्रदानार्थत्वात् प्रत्ययधर्म्मा स्तावद्दोहादयो भवन्त्येव। तण्डुलश्रपणसाधनत्वस्याऽपि तु सद्यस्प यतीति विधिबलेनार्थसिद्धत्वादसत्यपि तत्प्रयुक्तत्व तच्छेषत्वे वा साधनत्वसम्बन्धेनापूर्व्वसम्बन्धिश्रपणसम्बन्धित्वस्य सत्त्वाद्दधिशृतया प्रणीता धर्म्मा आप उत्पवनप्रणयनादयो भवन्ति न हि धर्म्मसम्बन्धे उद्देश्यस्याऽपूर्व्वशेषत्वमपि प्रयोजक गौरवात् अ प तु साक्षात्सह विषयत्वसिद्धो अपूर्व्वसम्बन्धित्वमेव। अतएवाऽगन्मेत्यादिमन्त्रस्याऽप्य पूर्व्वसाध्यफलार्थत्व स च सम्बन्ध प्रकृतौ श्रपणसाधनतायाः समस्त्येव।

ननु दधिशृतयोस्तण्डुलश्रपणसाधनत्वेऽपि न प्रणीताधर्म्मप्राप्तिः। प्रणीतानां हि संयवनार्थत्वेन विनियोगात्। प्रकृतौ च संयवना भावेन तदनुपपत्तेः। अतएव सौर्य्यादिचरुष्वपि पिष्टकरणाद्याका भावात् कपालतद्धर्म्मनिवृत्तिवत् संयवनाभावात् प्रणीतातद्धर्म्म निवृत्तिरवस्ति चेत्। प्रणीतानां वाक्येन पिण्डसंयवनसाधनत्वा वगमेऽपि आनुषङ्गिकहविःपाकसाधनत्वस्यापि सत्त्वात् सौर्य्यादि चरौ प्रकृतौ च प्रणीताधर्म्माविपत्तेः। कृत्वाचिन्तया चाऽयं विचारः। इयञ्च

चर्व्वन्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वे सति समवायित्वात् सामान्यमुखव्याप्त्या मृत्पिण्डवदिति नद्वेष्वपि चैवमेवाऽनुमान-प्रकारो बोध्य । यथा वैतुष्यप्रयोजका वैतुष्यान्वयव्यतिरेकानुविधा-यकान्वयव्यतिरेकवत्त्वात् । कुलालपितृदण्डादिवदिति । द्वितो-योदाहरणन्तु परिधिरेवायूपीयत्वस्य शब्दगम्यत्वाभावेऽपि परिधिजन्यत्वस्य तद्गम्यत्वात् । तृतीयोदाहरणे शरमयं बर्हिरित्यत्र बर्हिःपदेन तत्कार्य्यलक्षणाच्छराणां बर्हिःस्थानापन्नत्वम् । चतुर्थो-दाहरणे "कृषकसोमस्तस्य" इत्यादि ऋचा प्रकृतौ बहिष्पवमानस्तोत्रे कृतकार्य्यायां उपहव्याख्यविकृतौ अतिदेशेन प्राप्तौ "न सोमेति ब्रूयादिन्द्र इति ब्रूयादि"ति निषेधानुवादबलेनेन्द्रपदस्य सोमपद-स्थानापन्नत्व एव "न मित्रस्येति ब्रूयादर्यम्ण इति ब्रूयादि"त्यादावपि वैकृतमुदाहर्त्तव्यं । पञ्चमं तु निषेधकल्पनाभावेऽपि छन्दतश्चिन्तया तदेव । षष्ठोदाहरणन्तु "यदि सत्राय दीक्षितानां माऽप्युत्तिष्ठासेत् सोममपभज्य विश्वजिता यजेत । य सत्रायाऽऽगुरेत स विश्वजिता यजे-तेत्यादौ सामान्याभावे वैश्वानर्य्यादौ बोध्यं । अत्र च स्थानापत्ति-सत्त्वेऽपि न सत्रादिधर्म्मप्राप्तिः । अङ्गापेक्षयामङ्गघटितसाङ्गस्यैव पुरःस्फूर्त्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वात् । ८ । २ । ८ ।

॥ तदुत्पत्ते ॥ परिधौ पुनराक्षिप्य समाधीयते न परिधेर्यूप-स्थानापन्नत्व "परिधौ पशुं नियुञ्जीते"त्यत्र परिधेर्नियोजनानुवादेन विधावतिप्रसङ्गापत्ते । पशुनियोजनानुवादेन विधौ विशिष्टो-द्देशापत्तेर्नियोजनान्तरस्यैवाऽप्राप्तस्य विधेयत्वात् । अस्तु वा स्थाना-

धर्मेषु रथन्तरोपादानं केषुचिद्दृत इति प्रतिनियतनिवेशाद्रथन्तरत्वादि विवक्षया धर्मोऽव्यवस्थेत्यप्यपास्तम्।

नचैवमपि रथन्तरादिगीतेः ऋगक्षरव्यङ्ग्यांशस्य दृष्टार्थत्वेऽपि स्तोभाक्षरव्यङ्ग्यांशस्यादृष्टार्थत्वात्तदृष्टयोश्च गीतिभेदेन भेदात्तत्तदपूर्वसाधनत्वलक्षणया धर्माणां प्रकृतौ न साङ्कर्यम्। कण्वरथन्तरस्य तु बृहद्रथन्तरयोऽप्राप्तत्वेन तद्गतस्तोभान्वितगीत्यंशस्य प्राकृतस्तोभान्वितगीत्यंशजन्यादृष्टार्थत्वेनैव हिरण्यगर्भमन्त्रन्यायेन कल्पनात्तत्रापि धर्मानुपपत्तिरिति वाच्यम्। एवमपि ऋगक्षराधिकरणगीत्यंश उद्वैमुख्यादिरूपधर्मसाङ्कर्यस्याऽनिवारणात्। न च तथाऽपि सामद्वयजन्यनियमादृष्टभेदात्तन्नियमादृष्टसाधनत्वस्यैव च तत्तद्धर्मविधायुद्देश्यतावच्छेदकत्वात् कण्वरथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् साङ्कर्याद्यनापत्तिरिति वाच्यम्। नियमादृष्टस्य नियमजन्यत्वेन सामजन्यत्वाभावात्। तज्जन्यत्वेऽपि वा दृष्टप्रयोजनस्यैवाऽनभिसन्धाने पुनः स्फूर्तिकतया साधनतत्त्वप्रयोजकत्वेन नियमादृष्टस्य तत्प्रयोजकत्वाभावात् इतरथा कण्वरथन्तरेऽपि अवघातनधर्मस्यापत्तेरिति शामे—यद्यपि स्तोत्रद्वयजन्यापूर्वैक्ये प्रधानकार्यभेदाद्वाच्यमिति। तथा हि स्तोत्रत्वं तदाश्रयैकत्वं वा न तावत् पञ्चगुणाभिधानव्यक्तिविश्रान्तं द्वादशस्तोत्रत्वानुपपत्तेः। अपि तु तत्तत्स्तोमकगुणाभिधानव्यक्तिषु व्यासज्यवृत्ति। तासाञ्च न यौगपद्यं क्षणिकत्वात् क्रमिकत्वाच्च। अतस्तत्तद्गुणाभिधानेभ्यः संस्काररूपाण्यदृष्टान्युत्पद्यन्ते तैश्च सकलगुणसमूहात्मकनात्मिका तत्तद्विजातीयस्तोत्रत्वावच्छिन्ना अभिधानव्यक्तिरेकोत्पद्यत इति

वस्तुतस्तु यावदतिदेशेन प्राप्यते तावत् पूर्व्वमेव परिधि-
विशिष्टप्राकृतनियोजनस्यैव परिधिप्राप्तिफलकतया पशूद्देशेन विधा-
नोपपत्तेः स्थानापत्त्यविरोधः। न च धर्म्मासम्भवः। उद्देश्यस्वरूपे
ऽानर्थक्यप्रसक्तौ शास्त्रस्य महाविषयत्वसिद्ध्यर्थं अपूर्व्वसम्बन्धित्वस्यै-
वोद्देश्यताघटकत्वात् सम्बन्धित्वस्य सम्बन्धाविति प्रतीतिमात्रिकः-
सकलतत्तत्सम्बन्धित्वव्यापकोऽखण्डोपाधिरूपो धर्म्मः। तेन तत्तत्-
सम्बन्धान्यतरस्वरूपतया सम्बन्धित्वस्य न गुरुभूतत्वशङ्का। यदपि चैत-
दग्नेत्यादिमन्त्रस्याऽपूर्व्वार्थमुत्तराधिकरणे।

यत्तु छेदनादीनां यूपोत्पादकतया नाऽयूपे परिधौ धर्म्मप्राप्तिरिति,
तत्र पार्थसारथि। तदुक्तरीत्यैव यूपशब्दस्य दृष्टादृष्टसंस्कारसमुदायि
शक्तिः। न तु तावत् संस्कारजन्यादृष्टान्तरे प्रमाणाभावात्। तावत्
संस्काराणामेव च नियोजनाङ्गत्वम्। अतश्च परिधिस्थलेवाप्यादौ
कतिपयधर्म्मबाधेऽपि धर्म्मान्तरकरणं नाऽनुपपन्नमिति। तन्न। समु-
दायस्यातिरिक्तत्वे तस्यैव नियोजनाङ्गत्वापत्तेः संस्काराणां समु-
दायोत्पादकत्वापत्तौ परिध्यादौ तदभावेन धर्म्मप्राप्त्यनापत्तेः।
अनतिरिक्तत्वे शक्यतावच्छेदकभेदेनानेकशक्तिताद्वस्थ्यात्। इत-
रथा, लक्षणोच्छेदापत्तेः। अतो लाघवादाख्यनोदिपदवदेवा-
दृष्टान्तरे तद्विशिष्टकाष्ठ एव वा यूपपदस्य शक्तिः। तथादृष्ट-
नोच्छ्रयणाञ्जनादिमत्कतसंस्कारजन्य अपि तु यूपाहुत्याद्यङ्गकच्छेदन-
जोषणाष्टाश्रीकरणजन्यमेव। अतएव याज्ञिकानां दीक्षाकाले ताव-
त्तामेवाऽपकर्षः। युक्तञ्चैतत् "दीक्षासु यूपं छिनत्ती"त्यत्र यूपोत्-
पत्त्यनुवादेनैव दीक्षाकालविधानात्। इतरथा यूपच्छेदनो

नैव तज्जनकत्वम्। न च भामसीवगार्दंज्ञात्वद्वयावच्छिन्नोत्पत्ति, निमीलनादेरपि भामसीत्वमम्पादकतया चक्षुर्मात्रस्य तद भावात्। न च मन्मीलनादेरपि समुच्चय सम्मीलनादिसमुच्चयं मात्मसोमत्वदैवत्वद्वयावच्छिन्नोत्पत्तिस्तदुत्पत्तौ च प्रयोजकमत्वात् सम्मीलनादिसमुच्चय इति दर्शनसाध्यत्वात् एकव्यक्तौ जातिद्वयाङ्गी कारे साङ्कर्यप्रसङ्गाच्च। अतः सम्मीलनादीनामैच्छिकौ विकल्प एवेति। ८। ३। १२।

॥ उभयसाम्नि ॥ यत्र समवर्गीसत्र्येनादौ बृहद्रथन्तरयो प्रकृतौ विकल्पे प्राप्त "उभे बृहद्रथन्तरे भवतः" इति श्रुतम्। तत्र प्रथमे तावदेक एवस्तोत्र साम्नावेव च तस्मिन् विकल्पस्तदाऽनेन वचनेन तयो समुच्चयमात्रविधानादेकस्मिन्नेव सप्तदशस्तोमके पृष्ठे र्थगत सामद्वय तत्र च व्यवस्थिता एव तत्तद्धर्मा। यदा तु प्रकृता वेव पृष्ठस्तोत्रद्वय वैकल्पिक इह च तयोरेव बृहद्रथन्तरपदभक्तितयो समुच्चयस्तदा तत्तत्स्तोत्रकपृष्ठद्वयस्य प्रत्येकमसप्तदशस्तोमकस्य कारणात् दुर्धर्माणा व्यवस्थैव। नह्यत्रैकैककार्यं समुच्चितसाद्वयविधान येन कैककार्ये उभयविधानादुभयत्रोभयधर्मा स्यु। विशिष्टविधिगौर वादप्राकृतकार्यतापत्तेश्च। यथावस्थितयोरेव समुच्चयमात्रविधा नाङ्गीकरणात्। अतस्तत्तत् साम्नि तत्तद्धर्मा एव सम्मीलनादय। नैमित्तिकग्रहणयतानियमस्तु सत्यपि सामद्वयी तयोर्विरोधित्वाभावेन निमित्तत्वाभावाच्चभवतोत्युक्त कास्तुभे। अत्र च पृष्ठद्वयजन्यापूर्वस्यैक जातीयत्वेऽपि समुच्चयानुरोधेन व्यक्तिद्वयोत्पत्तिरिति ध्येयम्।

इदञ्च पृष्ठद्वयसमुच्चयोदाहरण समवर्गीसवादिरूप मूले कृत्वा

गणोत्ताधर्मीपासि मत्यप्यकर्मान्तरत्वेदधिशृतयोराग्नेयहवि श्रवण साधनत्वस्य नैमित्तिकसहत्यप्रयुक्तत्वे नैमित्तिकतुल्यत्वात् फलचम सन्यायेन स्यानापत्तेरेव नतु व्रोहियवन्यायेनेति ध्येयम । ८।२।११।

॥ पृष्ठार्थत्व ॥ ज्योतिष्टोमे "पृष्ठै स्तुवत" इत्यनेन षट्पृष्ठस्तोत्राणि विहितानि । तच बृहद्रथन्तरसामसाध्ययोर्बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनाद्विकल्प । तथा नौधसश्यैतसाध्ययोरपि । तत्र च नियतानि चत्वारीत्यादि चित्राधिकरणे कौस्तुभे स्पष्ट । तत्र च रथन्तरे प्रस्तूयमाने सम्मोलेन्तरपुरस्कारेण केचिद्धर्मा विहिता । रथन्तरे प्रस्तूयमाने सम्मीलेनोच्चैर्गेयमित्यादय । केचित्तु बृहत्पुरस्कारेण बृहति प्रस्तूयमाने समुद्र मनमाध्यायेदुच्चै गेयमित्यादय । अत्रोभयत्रापि साम्न एवेत्वमेव नतु निमित्तत्व उच्चैस्त्वादिप्रायपाठात् । ते किमुभयत्राऽपि सङ्कीर्णा उत व्यवस्थिता इति चिन्तायां सत्यपि स्तोत्रभेदे तज्जन्यादृष्टस्य लाघवादेकजातीयस्यैव कल्पनादेकापूर्व्वसाधनीभूतार्थत्वेन धर्माणामवघातादिवत् सङ्कर । सहानयो प्रयाजानुयाजवत् समुच्चयो येनाऽदृष्टवैजात्यमावश्यक स्यात् । अतएव विकल्पवचनस्याऽपि अदृष्टत्वे एव तात्पर्य्यमित्यपि सुवच । अनयाऽपूर्व्वस्यैकत्वात्तत्तत्स्तोत्रसामस्यैव स्वरूपेण प्रवेशात्प्राप्तो धर्मसङ्कर । अतएव रथन्तरस्य "अभित्वाशूर" त्यस्यामृच्युत्पन्नत्वेन शूरादिप्रकारस्य "बृहतश्चत्वामिद्धि हवामहे' इत्यस्यामुत्पन्नत्वेन आवाहनादिप्रकारस्य च भेदेऽपि न प्रवेश । अस्य ऋक्साधनताप्रकारत्वेन सामसाधनताघटकत्वाभावाच्च न हि ऋगर्थभेदेऽपि साम्नोऽक्षराभिव्यञ्जकता भिद्यते कथं रथन्तरे प्रकारद्वयस्याऽप्यभावेन धर्मोपाश्रनापत्तेश्च । अतएव केषुचि

त्वात् तस्य चाऽसंस्कार्यत्वादारादुपकारकयोर्युक्त एवातिदेशः । यदि तु कालस्याऽपि कर्माङ्गतयोपयोगात् स्मृतिबलेन सर्वादौ स्मरणस्याऽपि पुनरकालकत्वसम्भावनानिमित्तकाशङ्कापरिहारार्थं कर्मयदेव स्मरणोपपत्तेः सामवायिकत्वलाभाय कालसंस्कारत्वमिष्यते । तथाऽपि विकृतौ तत्कालीनायामनिदेशे बाधकाभावादन्यकालीनायामपि पशुपुरोडाशादिसदृहेनाऽतिदेशोपपत्तेर्न काचित् क्षतिः । यत्तु पार्वणशब्दस्य पूर्णातिदर्शनवाचित्वादधिकरणव्युत्पत्त्या कालवाचित्ववत्सम्प्रदानव्युत्पत्त्या कर्मवाचित्वस्याऽपि सम्भवात् प्रकरणात् कर्मपरत्वमेव । तथाऽपि पर्वशब्दवाच्यस्याऽऽग्नेयादिसमुदायस्य विकृतावपि देवतात्वसम्भवादारादुपकारयोरनयोरतिदेशे न किञ्चिद्बाधकम् । यदि तु सन्निपत्योपकारकत्वलाभाय देवतासंस्कारकत्वमिष्येत । तथाऽपि पर्वत्वस्य दानत्वापरपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्वसाधनरूपेणाऽऽग्नेयादीनां प्रत्यक्षमेवोद्देश्यत्वावगतेर्हविरभिमर्शनमन्त्रवद्विकृतावतिदेशोपपत्तिः ।

न च तत्र शब्देन एव हविषामुद्देश्यत्वावगतेरुद्देश्यसाहित्यस्य चाऽविवक्षितत्वाद्युक्तोऽतिदेशः । प्रकृते तु तद्धितशब्देन देवतात्वेन तेषामुपादानात् साहित्यविवक्षोपपत्तेः सत्यपि वैमृधस्यायेनोद्देश्यवाचकपदान्तरकल्पनयाऽऽग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयतादशायां विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वावगमाद्विकृतौ च तेषामनुपयोगित्वेन संस्कार्यत्वानुपपत्तेर्देवतासंस्कारकयोः पार्वणहोमयोरनतिदेश इति वाच्यम् । उद्देश्यसामर्थ्यानुरोधेनाऽऽग्नेयादीनामपि अपूर्वसाधनत्वेनैव रूपेण देवतात्वावगमेर्विकृतावपि

भवश्य वाच्यम्। तत्र च विजातीयस्तोत्रजनकतावच्छेदकतया संस्कारेष्वपि वैजात्यावश्यभावाद्दोचणीयावाङ्नियमन्यायेन तत्तत् संस्कारसमूहप्रयुक्ता एव तत्तद्धर्मा इति न प्रकृतो साङ्कर्य्यम्। कथ रथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव जगान्तरजन्यमात्रदशमस्यके गुणाभिधानव्यक्तिविधानात्तत्तत्संस्कार प्रयुक्तधर्मप्राप्त्युपपत्तिरिति सव्यमनाकुलम्। ८। २। १२।

॥ प्रप्राकृते ॥ वैश्यस्तोमे कण्वरथन्तरपृष्ठं भवती"ति श्रुतम्। तत्र प्रकृतौ बृहद्रथन्तरयोरिव पृष्ठसामाधिकरण्यात् पृष्ठपदसमानाधिकरणसामत्वसादृश्येन स्तोत्रं पृष्ठ एव निविशते ननु मैत्रावरुणादि पृष्ठेष्वितोति तत्रैव कौस्तुभे स्पष्टम्। भतय बृहद्रथविकारत्वात्तद्धर्मप्राप्तिरपि पूर्वाधिकरणोक्तरीत्या च।तथादेव सा च किं समुच्चये नोभयधर्मप्राप्ति उत विकल्पेनेति चिन्तायां स्तोत्रद्वयजनकविजातीयसंस्कारसमूहाया प्रकृतौ तत्तद्दकमात्रादिमात्रयोर्भेदेन विकल्पेनोत् पत्तावपि वैश्यस्तोमे कण्वरथन्तरतदाश्रयभूतऋगादिरूपसामग्र्यैकस्यैव नैकस्मिन्नेव मतदशमस्यके संस्कारसमूहे तज्जन्यगुणाभिधानसमूहा लभ्यन्ते या वैजात्यद्वयाभिव्यक्तौ बाधकाभावात् प्रयोजकद्वयमत्त्वे ऽविरुद्धमप्रोतनाद्धर्माणां समुच्चयोविरुद्धोद्वैमत्वादीनां तु विकल्प इति प्राप्ते।

भाष्यकारेण तावदिष्टापत्त्येव समाहितम्। वार्त्तिककारस्तु पृष्ठद्वयजन्यापूर्वस्यैकजातीयत्वेनाऽतिदेशेनेह प्राप्तौ तत्साधनत्वेन विकल्पेनैव पृष्ठस्तोत्रद्वयस्य तत्साधनीभूतसंस्कारसमूहद्वयस्य च प्राप्त स्यात्तत्साधनत्वेनैव चोपदिष्टयो कण्वरथन्तरादिसामतद्वचोर्विकल्प

च्छेदककोटौ साहित्याद्यविवक्षायामपि उत्तरकालप्रतियोगित्वे उपादेयत्वात् दर्शपूर्णमासाभ्यामिष्ट्वे"ति तद्विवक्षा ।

अतश्च सोमे विकृत्युत्तरत्वप्रसङ्गवत् सौर्यादावपि पौर्णमास्युत्तरत्वाभावान्नाऽतिदेशप्रसङ्गः । अन्वारम्भणीयायां तु साहित्यादेरविवक्षा दर्शपूर्णमासयोरुद्देश्यतावच्छेदककोटिप्रविष्टत्वादिति युक्तस्तस्यातिदेशः । प्रकृतौ पार्वणहोमयोस्तु आश्रयिकर्मत्वेन परप्रयुक्तदेवतोपजीवित्वात् स्वरूपेणाऽऽग्नेयादीनां देवतात्वानुपपत्तेर्युक्त एवाऽतिदेशः । यत्तु समुदायापूर्वप्रयुक्तत्वात् पार्वणहोमयोर्विकृतौ च सौर्यादौ तदभावादनतिदेश इति । तन्न, एवमपि वैश्वदेवादिपर्वणि तत्प्रसक्तेनाऽतिदेशापत्तेः । प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्यादावनतिदेशापत्तेश्च । न हि प्रयाजादीनां प्रकृतौ परमापूर्वप्रयुक्तत्वं हि कारणानापन्नं । अपि तु समुदायापूर्वप्रयुक्तत्वमेव ।

अथ तस्य प्रयोजकता न समुदायापूर्वत्वेनाऽपि तु उत्पत्त्यपूर्वाव्यवहितापूर्वत्वेनेति तथा सौर्यादावतिदेशस्तत्र पार्वणहोमयोरपि तुल्यमितिप्राप्ते । सत्यमेव । तथाऽपि कथामपि याज्ञिकानां विकृतौ पार्वणहोमानुष्ठानादाचारस्येव प्रकृतौ साहित्यस्यान्वयित्वादेर्योद्देश्यतावच्छेदककोटौ विवक्षा न सौहित्यादिपदविवक्षेत्येव तात्पर्यग्राहकत्वात्तयाचारस्य च विकृतावभावादनतिदेशः पार्वणहोमादीनां । अतएव नाऽऽचारेण तत्तद्विकृतिपर्युदासरूपेणाऽनन्तश्रुतिकल्पनागौरवापत्तिः । सूत्राण्यप्याचारमेवोपरोध्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि । ८ । २ । १४ ।

॥ उभयो ॥ अन्यथा कर्मभेदावगतेरेकवाक्योपात्तकर्मद्वयस्याऽपि

चिन्तयेति द्रष्टव्यम्। वस्तुतस्तु तेषु उभे बृहद्रथन्तरे भवत इति प्रकृत्य "पवमाने रथन्तरं कुर्य्याद्बृहत् पृष्ठं भवती"ति पञ्चविंशब्राह्मणानुरोधेन लाट्यायनिकल्पे रथन्तरस्य पवमानस्तोत्रे निवेशाभिधानात् पृष्ठस्तोत्रे उभयोः साम्नोर्वा एकस्मिन् कृतावुभयोः पृष्ठस्तोत्रयोः समुच्चयः। अतएव पवमानेऽपि रथन्तरं विधीयमानं न सम्मीलनादीन् धर्मान् गृह्णाति रथन्तरस्य तैर्विनाऽपि जायमानत्वेन रथन्तरस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणाया पृष्ठजनकसंस्कारसमूहसाधनत्वस्यैव लक्षणीयत्वात्तदभावे यूपावटस्तरणवर्हिवदप्राकृतकार्य्यापत्ते रथन्तरादावप्राप्ते। अतएव यैर्विना रथन्तरमेव पठितुं न शक्यं यथा स्तोभादिभिस्तैरेतरावेपक्षत्वे प्रमाणाभावाद्यदा तदात्ययभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन्। तदा तदङ्गभूतस्तोभादीनां "प्रधाने नीयमाने हि तत्राऽङ्गान्युपकर्षन्ती"ति न्यायेनाऽनुष्ठाने न काचित् क्षतिः। अत क्रत्वन्तरे एतादृशवाक्यसत्त्वे स्तोत्रान्तरे विनियोगाभावे चेदमधिकरणं द्रष्टव्यम्। ८। २। १४।

॥ पार्व्वणहोमयोः ॥ दर्शपूर्णमासयोः "स्रुवेण पार्व्वणौ होमौ जुहोती"ति श्रुतम्, तत्र संज्ञाभिस्तु कर्मद्वयं सुवपर्व्वदेवताविशिष्टं विधीयते। न च हवि समभिव्याहाराभावान्नाऽयं देवतानिर्देशः। सम्बन्धसामान्यवाचिन एव योग्यतया देवतात्वपरत्वोपपत्तेः। तदिदं होमद्वयं विकृतावतिदिश्यते न वेति चिन्तायां प्रयाजादिवदतिदेशः। न च पर्व्वशब्दवाच्यकर्मसमुदायस्यैवाऽत्र देवताभूतस्योद्देश्यत्वेन संस्कारात्तस्य च विकृतावभावान्नाऽतिदेश। पर्व्वशब्दस्य काले मुख्यतया कर्म्मणि लक्षणास्वीकारे प्रमाणाभावात्। अतोऽत्र कालस्यैव देवता-

प्रयोगानुपपत्तेः । न च पूर्णमासादिशब्दस्य पार्वणहोमयोर्देवतात्वेऽपि तदर्थस्याऽपि आग्नेयादिकदेशगतविषयशब्दप्रतिपाद्यत्वसम्बन्धेनोद्देश सम्बन्धित्वात् पार्वणहोमसंस्कार्यत्ववदिहाऽपि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याऽग्नेः संस्कार्यत्वोपपत्तिरिति वाच्यम् । तथात्वेऽपि 'समिधोऽग्न आज्यस्य व्यन्तु तनूनपादग्न आज्यस्य वेत्वि"त्यादिमन्त्रवर्णस्थाने सम्बोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियान्वयप्रतीतेः समिदादिपदस्याऽग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पशावतिदेशानुपपत्तेश्च । यत्त्वितरप्रयाजानामारादुपकारकत्वेऽपि समिद्यागस्य सामिधेन्यङ्गभूतसमित्संस्कारकत्वमिति । तन्न । तथात्वे "यो वै प्रयाजानां मिथुनं वेद समिधो बह्वीरिव यजतो"ति लिङ्गानुपपत्तेः । अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेनाऽऽरोपितं बहुत्वमिति सूच्यते । न च तत्सन्निधानाङ्गसमित्सु युज्यते वस्तुत एव तासां बहुत्वात् । आरादुपकारकत्वपक्षे तु सत्यपि बहुवचनात्समित्पदस्य देवतात्वे प्रातिपदिकमात्रबलेनैकस्यैव समित्पदार्थस्य सिद्धौ लिङ्गवशेन युक्तो बहुत्वारोपः । तस्माच्चत्वारोऽपि प्रयाजा आरादुपकारका एवेति न विकृतावावर्तितव्या ।९।२।१६।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

नवमस्य द्वितीयपादः ।

---

देशोपपत्ते । इतरथा स्वाहाकारपशुपुरोडाशादावपि अग्नाग्नी षोमत्वादिनैव देवतात्वोपपत्ते सौर्य्यसवनीयादौ तेषामतिदेशा नापत्ति ।

इदञ्च सर्व्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु विशिष्टविधौ गौरवापत्ते र्देव समभिव्याहाराभावेन च देवतातद्धि- तत्वानियमात् पर्व्वणि भवौ पर्व्वसंस्कारकौ वेत्येवमपि तद्धितोपपत्ते र्योग्यतयाऽपि तदवधारणायागावाऽऽय देवताविधि

मन्त्रवर्णादेव तु क्रमावगताङ्गभावाद्देवतासिद्धिरिति पार्व्वणपद नामधेयमेव । अतएव याज्ञिकाना "वयम चाऽजिन यय पूर्णमास यजामहे । अमावास्या सुभगा सुषेवे" ति मन्त्रगतपूर्णमासामावास्या शब्दयोरेव त्यागवेलायामुद्देशो न तु पर्व्वशब्दस्य । एवञ्च तन्त्रत्यपूर्ण मासामावास्याशब्दयो काले प्रयोगाभावान्मन्त्रावपर्य्यालोचनया कर्म्मपरत्वावगतेरेकैकस्याऽऽग्नेयादिविकसंस्कारकत्वेऽपि पूर्व्वोक्त रीत्यापशुपुरोडाशादिवत् सौर्य्यादावतिदेशे बाधकाभाव । न हि उद्दे शास्य प्रयोजकत्वे परप्रयुक्तदेवतोपजीवित्यागाशे स्वरूपेणाऽऽग्नेया देर्देवतात्व सम्भवति । अतो येनैव अपूर्व्वसाधनविशेषरूपेणोद्देश्याय प्रति संस्कार्य्यता, तेनैव रूपेण त्यागाय प्रतिदेवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्व्वणहोमयोरप्यतिदेश । एव वैमृधेऽपि येनैव रूपेणाऽपूर्व्वसाधनविशेषत्वादिना पौर्णमास्या उद्देश्यता, तेनैव रूपेणान्तरफलप्रतियोगित्व दृष्टार्थत्वात् समुदिताग्नेयत्वादिरूपे णेति तदुद्देश्यतावच्छेदककोटौ सहितत्वस्याऽऽग्नेयत्वादेर्याऽविवक्षित त्वादुक्त एव वस्तुपस्याऽपि विकृतावतिदेश । अस्तु वा तत्रोद्देश्यताव

तदवच्छिन्नस्योद्देश्यत्वेऽपि मन्त्रान्तर्गतव्रीह्यग्न्यादिपदे लक्षणाया प्रमाणाभावात्। अतएव तादृशबाधेनाऽपि प्रोक्षणजन्यादृष्टविशेष एव द्रव्यदेवतादौ संस्कारो जन्यते न तूद्देश्यतावच्छेदकेऽप्यपूर्व्व साधनत्वे। अतश्चोपकारकपृष्ठभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतावनिर्देशे सत्पृष्ठभावेन प्राप्यमाणस्याऽग्न्यादिपदस्य सौर्य्यादौ बाधात् द्वारसिद्धये पदान्तरप्रक्षेपो युक्त एव।

अतएवाऽग्निव्रीह्यादिपदानामवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ निरुक्तकार्य्यजनकत्वेन विधानेऽपि तत्कार्य्याभाव इव तत्कार्य्यस्य तेन कर्त्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः। तत्र त्वेतावान् विशेषः। कार्य्याभावे लोप एव। अशक्यत्वे तु तज्जनकोपायान्तरानुष्ठानमिति।

यत्तु मूले प्रकृतावेव नोपायस्य तत्त्वेन विधेयता। अपि तु अपूर्व्वसाधनविशेषोपायत्वेन इतरथा अदृष्टार्थत्वापत्तेः। अत एवाऽग्न्यादिपदस्य स्वरूपेणाऽविवक्षितत्वादयुक्त एव पदान्तरप्रक्षेप इति। तन्न। तथात्वे प्रकृतावेव व्रीहिपर्य्यायाणां दलनादेशाऽनुज्ञाने वैगुण्यानापत्तेः। येनैव रूपेण मुख्यकार्य्यं प्रति जनकता तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वौचित्याच्च। यत्तु अग्निपदेन शब्दरूप देवताप्रकाशनार्थं लक्षणावश्यम्भाव इति। अत्र ब्रूमः। सत्यामपि लक्षणायां येन स्वशक्यवाचकत्वसम्बन्धेन प्रकृतौ शब्दलक्षणा न तेनैव सम्बन्धेन विकृतावपीति द्वारभेदादयुक्त पदान्तरप्रक्षेप।

वस्तुतस्तु शब्दस्य देवतात्वेऽपि अपूर्व्वीयदेवतारूपशब्दवाच्यत्व सम्बन्धेनाऽर्थस्याऽप्यपूर्व्वसम्बन्धात् प्रकाश्यत्वोपपत्तेर्न मन्त्रान्तर्गता

सन्निधानादवान्तरप्रकरणाद्वा एकैकमन्त्र प्रति शेषित्वावगतेः कर्मद्वयस्याऽपि पूर्णमासदेवताकतया तत्संस्कारकत्वम् अमावास्या देवताकतया चाऽमावास्यासंस्कारकत्व प्रधानद्वयानुरोधेन च मन्त्र द्वयस्याऽपि तत्र तत्राऽऽवृत्ति । एकपदोपादानावगतकर्मद्वयमाहित्य बलात् सकृत् प्रयुक्तस्याऽपि पुनःस्मरणं "ताश्चतुर्भि"रितिवचनाऽनुपपन्नम् । तत्र च यथाक्रम पाठो येनैकस्य कर्मणः एक एव मन्त्रोऽङ्गं भवेत् । एकपदोपादानात् तु उभयोरप्युभयाङ्गत्व अतएव नाऽत्र सूक्तवाकवि भाग इतिप्राप्ते । "समसंख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध" इति न्यायस्यात्सर्गिकत्वादेकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाचा वृत्तमन्त्राङ्गत्वकल्पने पुनःस्मारकाकाङ्क्षाकल्पने च प्रमाणाभावादेक स्यैकसंस्कारार्थत्वमेवेति प्रयाजनन्त्राधिकरण । ८ । २ । १५ ।

॥ प्रयाजेऽपीति चेत् ॥ समिदादीनां चतुर्णां प्रयाजाना यदि समिदादिपदैर्देवतायाश्चेद्विधिः यजतीतिवद्देवताविधिर्यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिवत् पाक्षवाक्यस्थन्तु समिदादिपदं देवतानुवादानामधेयमेव वा सम्यथा सन्निपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पाञ्चपञ्चाम स्याज्याकारोत्तमानुयाजादिवत् । न च समिदादीनामुपभोगाभाव । वेदे मन्त्रे समिदादिपदानामग्निसामानाधिकरण्यदर्शनेनाऽग्नेरे उपयोगसम्भवात् समिन्धनस्यैव वा समिन्धनादावुपयोगसत्त्वेन तस्यैव सन्निपत्योपकारकत्वमितिप्राप्ते । सत्यपि वेदे समिदादिपदाना मग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादि पदैस्तत्प्रकाशनानुपपत्तेः । शब्दस्य देवतात्वेन तद्भेदे पदान्तर-

पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वाद्दर्भपदस्थाने श्रुतिहितेन पुण्ड रीकपदेनैव तन्निष्ठगुणप्रकाशनोपपत्तेर्न पुन पदान्तरेण प्रकाश नापेक्षा। अतोऽरितपदस्य लोप एव नतु तत्स्थाने पदान्तर प्रक्षेप इति प्राप्ते।

विधौ श्रुतस्य पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वेऽपि प्रकृता दर्भादिपदस्य *जातिमात्रवाचित्वात् तन्मात्रप्रकाशनाय जातिमात्र* वाचकस्य पद्मादिपदस्यैव दर्भादिपदस्थाने उचितत्वात् प्रकृता थिष पदान्तरेण गुणप्रकाशनाय हरितपदस्थाने पुण्डरीकपदगम्य निष्ठगुणवाचिपदान्तरस्य आवश्यक एव। तत्र यद्यपि पुण्डरीक सिताम्भोज"मिति त्रिकाण्डीयस्मरणात् सितपद प्रसज्यते, तथापि "यथाऽस्याम पुण्डरीकमवमक्षिणी" इति वेद प्रयोगात् पुण्डरी काद इत्यादौ रक्ताम्भोज एव शास्त्रस्थानां पुण्डरीकपदप्रयोगाच्च रक्ताम्भोजस्यैव विधयत्वेन रक्तपदमेवोहितव्यम् शास्त्रदीपिका यान्तु दर्भपदस्थाने पुण्डरीकपदोहवत्। अत पाथसारथराश्रुतस्याऽपि तेनैव *प्रकाशनाय रक्तपदाह* मित्युक्तिरिति ध्येयम्।९।३।२।

॥ लौकिके ॥ दैवे पयौ "यूपो यद्यस्य दुरिष्टमायुवत यद्युप स्यैवास्य दुरिष्टमामुवते तस्माद्यूपोनोपस्पृश्योऽयघेक यूपमुप स्पृशेदिष ते वायो इति ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहूनेते ते वायव" इति श्रुतम्। तत्र यूपस्य प्रकरणादिना प्राप्तत्वात् तत्तत् मख्याकस्पर्शएवैद मन्त्रविधानमित्यविवादम्। स्पर्श पर विहित अविहितो वेति चिन्तायां प्रकरणादश्वप्रतिग्रहेष्टिन्यायेन च विहितस्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिद कर्माऽङ्गतया

# भाट्टदीपिका ।

## नवमाध्याय ।

### तृतीयपाद ।

॥ प्रकृतौ ॥ "अग्नेरह देवयज्यया व्रीहीणां मेधे"त्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निव्रीह्यादिपदानां सौर्यनीवारादिषु द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मक ऊह सिद्ध एव प्रोक्षणादिवत्। तद्दशेन पदान्तरप्रक्षेपात्मको भाक्त ऊह अयमर्थसिद्धोऽप्याक्षिप्य समाधीयते। प्रकृतौ हि अग्निव्रीह्यादिपदेनाऽग्निव्रीह्यादीनां लक्षणयैवाऽपूर्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्यनीवारादीनामपि तेनैव रूपेण प्रकाशनत्वोपपत्तेर्न पदान्तरप्रक्षेपो युक्त। अतएव पाशानिति बहुवचनान्तस्य मन्त्रस्य प्रकृतावेकपाशकाया विकृता वपि लक्षणयैवैकत्वप्रकाशकत्वाद्योह। नह्यग्निव्रीह्यादिपद शक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपर अपि तु लक्षणयैव। "शक्यादन्येन रूपेण भाने भवति लक्षणे"ति न्यायात्। विशेषतश्च शब्दस्यैव देवतात्वात्तस्य चाऽग्निपदेन लक्षणयैव प्रतीतेः सूर्यस्याऽपि तथैव प्रतीतिसिद्धो नोहसिद्धिरितिप्राप्ते।

सत्यप्यपूर्वसाधनत्वस्य प्रकृतावुद्देश्यतावच्छेदकत्वे अग्निव्रीह्यादिपदेन स्वशक्तिजन्यबोधद्वारा अपूर्वसाधनीभूतद्रव्यदेवतादि सस्कर्षा दित्यर्थोऽवगम्यते। अतएव शक्तिजन्या बोधोऽपि व्रीहित्वाग्नित्वादिप्रकारक एव न त्वपूर्वसाधनत्वप्रकारक। लिङ्गकम्पाश्रुतिवाक्ये

अतएव यज्ञस्यैव यूपनिष्ठदोषजनकत्वाद्यज्ञात् पूर्व्वं कारणाभावेन अशुचित्वापरपर्य्यायदोषाभावात् क्रतुमध्यगतलौकिकस्पर्शेऽपि न दोषः। अतएव "यूपचित्याद्युपस्पर्शने स्नाया"दिति स्मार्त्तमपि प्रायश्चित्तं बहिः क्रतुविषयमेव। निषेधस्य मूलान्तराकल्पनात्। अस्तु वा तस्य सामान्यविषयत्वाद्न्तःक्रतुगतलौकिकविषयत्वमपि। तदा तु ऋत्विक्कर्त्तृको विहितोऽपि स्पर्शः शास्त्रमिव निषेधविषय एव तमतिक्रम्य प्रवृत्तस्याऽऽर्त्विज्यविधानोपपत्तेः। सर्व्वथा यूपकार्य्योपस्पर्शं एवाऽयं पुरुषार्थो मन्त्रपाठः। अतएव निषेधवाक्यप्राप्तयूपमनूद्य मन्त्रवर्णमिदं स्वतन्त्रमेव तत्तत्स्पर्श्याकस्पर्शे निमित्ते तज्जन्यदोषाभिघाताय विधीयते। नतु कश्चित् कर्म्मविदूह इति सिद्धम्। ८। ३। ३।

॥ अन्याय ॥ देवपशुपाशप्रमोचनेऽनुमन्त्रणद्वयमाम्नातम्। "अदितिः पाशं प्रमुमोक्त्वेत" मित्येकवचनान्तमेकं। "अदिति पाशान् प्रमुमोक्त्वेतान्"ति बहुवचनान्तमपरं। तत्राऽन्यस्याऽपि विकल्पमेकपाशकायामेव प्रकृतौ निवेश इति वक्ष्यते। तदेतन्मन्त्रद्वयं द्विपशुकायां विकृतावतिदेशेन प्राप्तं तत्रैकवचनान्तस्य तावत् प्रकृतावेव समवेतपाशसंख्याप्रकाशकत्वाद्द्विवचनेनोह इत्यविवादमेव। न च प्रतिपाशमोचनमस्य वृत्तेरनूह शक्यः। अस्याऽनुमन्त्रणमन्त्रत्वेन तन्त्रेणैव प्रयोगात्। बहुवचनस्य तु प्रकृतावसमवेतार्थकत्वेन अदृष्टार्थं वा साधुत्वार्थे वा प्रयोगाद्विकृतावनूहः।

अस्तु वा लक्षणयाऽप्यर्थप्रकाशकत्वे सम्भवति साधुत्वाद्यर्थकत्वस्याऽन्याय्यत्वाद्बहुवचनस्यैकत्वलक्षणार्थत्वम्। तथाऽपि स्वशक्त्या

ऽन्यादिशब्द शब्दलचणेति युक्तो व्रीहिपदइव पदान्तरप्रक्षेपः। अतएव सर्व्वत्रैव तत्प्रासो "पूयति वा एतद्वचोऽचरपदेन यदूहति तस्मादृच नोहे"दिति ऋगक्षरोहपर्युदासोऽपि सङ्गच्छते। अतएव तत्कार्य्यप्रकाशनार्थं तत्प्रकाशनसमर्थऋगन्तरोहएव कार्य्यो वैदिकत्वसामान्यात्। तदसम्भवे लौकिकवाक्योह तथा "न मातृ-मन्यता"मित्याद्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि "न माता वर्द्धते न पिते"त्यादिरूपोऽन्यथोहलिङ्गम्। यद्यपि च नाऽय प्रतिषेधविधि न्यायप्राप्तत्वादित्युक्तम् मन्त्राधिकरणे कौस्तुभे। तथाऽपि नित्यानु-वाद एवाऽयमन्यथोहलिङ्गम्। नचोहस्य न्यायसिद्धत्वे विकृतिविशेषे "विश्वेषां देवानामुस्राणां वपाना मेदसोऽनुब्रूहि" "अग्नये च्छागस्य वपाया मेदसोऽनुब्रूहो"त्यादिमन्त्रपाठवैयर्थ्य तस्य मन्त्रभ्रेषप्रायश्चित्त-प्राप्तिफलकमन्त्रत्वमिदार्थत्वात्। ८। ३। १।

॥ ज्ञाति ॥ सोमचर्य्यां "पौण्डरीकाणि वर्हींषि भवन्तो"ति श्रुतं। अत्र वर्हिःपदेन तत्कार्य्याणि हविरासादनवेदिस्तरणश्चोपदन-पवित्रकरणादीनि लक्षयित्वा तदुद्देशेन पुण्डरीकाणि विधीयन्ते। जन्यत्वसम्बन्धाश्रयणाय तद्वित। तत्र वेदिस्तरणे प्रकृतिप्राप्ते "स्तृणीत वर्हिःपरिधत्त वेदिं जामिं मा हिंसीरमुयाशयाना * दर्भं स्तृणीतह-रितं सुपर्णाः निष्का इमे यजमानस्य ब्रध्न" इति मन्त्रोचार्य वर्हिःपदे दर्भपदे चाक्षितव्य एव हरितपदेऽपूहितव्यो न वेति चिन्तायां गुणस्य प्रकृतावविहितत्वेन तत्प्रकाशकपदस्याऽसमवेतार्थत्वादनूहः। कथञ्चिन्मान्त्रवर्णिकगुणविधिकल्पनया वा समवेतार्थकत्वेऽपि इह

* अमुया वा विशोविति माध्यन्दन पाठः।

सङ्ख्याविवक्षायामप्यनाशङ्का मन्त्रपदान्तराणामर्थबोधकत्वानापत्तेः । अतएव बहुपाशकस्थले बहुवचनप्रयोगेऽपि न तस्य मन्त्रत्वं प्रकृतौ निरूढलक्षणया एकत्वप्रकाशक एव तस्मिन्मन्त्रत्वात् इह यतया बहुत्वप्रकाशके तस्मिन्मन्त्रत्वानुपपत्तेः । ८ । ३ । ५ ।

॥ विप्रतिपत्तौ ॥ बहुवचनान्तपाशमन्त्रस्य ऊहएव निवेशमङ्गो सत्य विप्रतिपत्तावूहचिन्तित । स एव लिङ्ग चिन्त्यते किं बहुपाशकाया मुत्कर्ष उत ऊह एव निवेश इति । तत्र बहुत्वप्रकाशनलिङ्गादनुष्ठान मादेश्यादेर्बाधे यूपानुमन्त्रणादिवद्विकृतावुत्कर्षः । न च तद्गत सामान्यसम्बन्धबोधकप्रमाणाभावः । ज्योतिष्टोमसन्नापकरणस्यैवा मर्थवत्तदङ्गन्यायसङ्कलस्य क्रतुपशुषु सामान्यसम्बन्धबोधकस्य सत्त्वात् । नचैवमपि पाशप्रातिपदिकार्थस्य पाशस्य द्वितीयार्थस्य कर्म त्वस्य प्रमोचनभावनायाश्च प्रधानभूताया ऊहेऽपि सम्भवेन तत्प्रति पादकानां लिङ्गविरोधाभावेनाऽनुष्ठानसादेश्यादिबाधे प्रमाणाभावाच्च गुणभूतबहुवचनमात्रानुरोधेनोत्कर्षकल्पना युक्तेति । वाच्यम् । अने केषामपि पदानामक्षोढादिपदानुरोधेन व्रीहिप्रयोग एव सङ्कोच वदुत्कर्षस्याऽप्युपपत्तेः । इतरथा एकगुणपदानुरोधेनेतरपदाना मुत्कर्षानापत्तेश्च । गुणभूतलिङ्गानुरोधेन प्रातिपदिकादेरपीत्कर्ष्य सङ्कोचवद्गुणभूतवचनानुरोधेनाऽपि तदुत्कर्षापत्तेश्च प्रातिपदि कार्थवल्लिङ्गसङ्ख्यादेरपि कारकएवाऽन्वयेन प्रातिपदिकार्थं प्रति सङ्ख्यादेर्गुणत्वे प्रमाणाभावाच्च । एवञ्चैकवचनान्तपाशमन्त्रेण विकल्पोऽप्यष्टदोषदुष्टो न भवेदितिप्राप्ते ।

नाक्रोत्कर्षः । गुणभूतबहुवचनानुरोधेन प्रधानभूतानां बहूनां

विधीयते। नह्येतं दोषनिर्घातार्थं येन विहिते तदभावादप्रवृत्तिः। यज्ञस्य विहितत्वेन अरिष्टजनकत्वासम्भवेनाऽर्थवादमात्रत्वात्। यदि-त्वत्र स्पर्शनिषेधाधिकारादिशब्दोपादानाभावाऽस्य प्रतिपद्धेष्टिवैलक्षण्य-माशङ्क्येत। ततोऽस्त्वयं विहितत्वेव यूपान्वारम्भादेः स्पर्शस्य ग्रहणा-ग्रहणवत् पाक्षिकत्वमित्यर्थो निषेधः। तत्र च तत्कारणपक्षे मय मन्त्रपाठोऽस्त्विति यदिमन्त्राविरोधः। यदि त्वष्टदोषदुष्टविकल्प-भिया निषेधस्य रागप्राप्तयूपस्पर्शविषयत्वमाशङ्क्येत, ततो निषेधस्याऽपि क्रतुमध्यप्रसक्तगमनागमनादिप्रसक्तयूपस्पर्शविषयत्वेन "नाऽनृतं वदेत्-स्त्रियमुपेयात्" इत्यादिवत् क्रत्वङ्गत्वोपपत्तेः। स्पर्शस्य क्रतुवैगुण्यापाद-कत्वावगमात् तत्प्रायश्चित्तत्वेनाऽयं मन्त्रविधिः क्रत्वर्थ एव।

एवञ्च यूपानेकत्वन्यायादेवैतान् "तान्" इत्याद्यूहोमन्त्रत्वसिद्ध्यर्थं पुनः पठ्यते। नचैवमपि कल्पितमन्त्रपाठमात्रस्य प्रयोजनलाभेऽपि यदि द्वापित्यादिविनियोगप्रयोजनाभावः देवमविधिपठितानां चयाणा-मेवा पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्त्यातुल्यकर्त्वसिद्ध्यर्थत्वा-दिति प्राप्ते।

वस्तुतो यज्ञस्य पापापरपर्यायदुरिष्टजनकत्वाभावेऽपि निन्दार्थवादे यज्ञप्रयोगजन्ययूपनिष्ठदुरिष्टस्य यूपस्पर्शकर्त्तरि सञ्चारसङ्कीर्त्तनेनाऽस्य पुरुषार्थत्वावगतेः निषेधस्य यज्ञप्रयोगसमानुत्तरकालीनत्वावगमात् पुरुषार्थत्वावगते-रस्याऽपि तद्दोषनिवारणार्थस्य प्रायश्चित्तस्य लिङ्गेन प्रकरणं बाधित्वा पुरुषार्थत्वमेव। अतएव सूत्रभाष्यस्य स्वारस्याद्यूपकार्यापवर्गोत्तर-मेवेदं प्रायश्चित्तं नतु वार्त्तिकादिस्वारस्यात् क्रतुमध्यगतलौकिकस्पर्श-ऽपीति ध्येयम्।

प्रयोगयोरूहेनातिदिश्यत इति युक्तं प्रयोगयोः परस्परं प्रकृतिविकारभावे प्रमाणाभावात्। लिङ्गस्य वक्ष्यमाणरीत्या सर्वसाधारणत्वाच्च। यत्र हि उपदेशस्य प्रापकप्रमाणस्यैकमात्रविषयत्वम् अन्यत्र च कार्य्यस्य तेनाऽतिदेशतः प्राप्तिस्तत्रैवोहः। न च प्रापकप्रमाणस्य सर्वविषयत्वं अत्र च प्रागन्यायेन प्रातिपदिकादिलिङ्गस्य सर्वविषयत्वोपपत्तेरेकवचनानुरोधेन सङ्कोचायोगात्ऽस्य प्रापकप्रमाणस्यैकपशुप्रयोगमात्रविषयत्वम्। न च क्रतुपशुना समानविधानत्वकल्प्यत्वाचिन्तायां "प्रास्मा" इत्यस्य लिङ्गानुरोधेन मेषोवत् सङ्कोचवदिहाप्येकवचनानुरोधेन मन्त्रसङ्कोचोपपत्तिरिति वाच्यम्। विना कारणं पुंलिङ्गस्य लक्षणायां प्रमाणाभावेन तत्र सङ्कोचोपपत्तावपि प्रकृते सङ्कोचे प्रमाणाभावात्। नचात्र द्विबहुपश्वीकप्रयोगे एकवचनस्य लक्षणा। प्रत्येकव्यक्तिगतैकत्वाभिप्रायेण तदुपपत्तेः। यथैव हि शुक्लः घटः इत्यादौ शुक्लगुणस्य प्रत्येकवृत्तित्वेनाऽन्वयः। तथैकवचनाभिहितस्यैकत्वस्याऽपि प्रत्येकव्यक्तिवृत्तित्वेनाऽन्वये न काचित् क्षतिः। नचैवं "बहुषु बहुवचनम्" इत्याद्यनुशासनस्य निर्विषयत्वापत्तिः। बहुत्वस्य शाब्दबोधे विवक्षायां तदुपपत्तेः। तथैव पशुना यजेतेत्यादौ द्वित्रिपशुग्रहणेऽपि बाधकानापत्तिः प्रथमातिक्रमे कारणाभावेनैकवचनस्यैवेच्छया प्रत्यन्तरस्याहृतिफलकत्वोपपत्तेः। अतश्च द्विबहुपश्वीकप्रयोगे एकवचनान्तस्यैव मन्त्रस्य प्रयोगोपपत्तेर्न तत्रोहो न वा "व्रीहीणां मेधे" इत्यत्रापि इति सिद्धम्। ८। २। ७।

॥ विकृतौ ॥ एवं प्रकृतावेव समवेतार्थकत्वेन द्विबहुपश्वीकप्रयोगयोरपि मन्त्रस्याऽविकारे सिद्धे विकृतौ द्विबहुपश्वीकप्रयोगयोरपि

यथावयवसन्न्यायविहितिसंख्यात्वसम्बन्धेन प्रकृतावेकत्वलक्षणाया इव विकृतौ द्वित्वलक्षणाया अपि सम्भवादनूह । नचैव "निषिद्ध सुपामि"त्यनुशासनेनैव विहितत्वात् न च दृष्टानुविधि च्छन्दसि भवतीत्यनुशासनात् प्रकृतावस्य दृष्टत्वेनैकत्वलक्षकत्वेऽपि विकृतौ अदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिरिति । वाच्यम् । प्रकरणेन प्रकृतौ दृष्टत्ववदतिदेशेन विकृतावपि दृष्टत्वात् इतरथोत्कर्षेणाऽस्य सम्बन्धोपपत्तेरेकत्वस्याऽपि लक्षणापत्ते । अतो द्विपाशकायामपि विकल्पेन द्विवचनबहुवचनप्रयोग इति प्राप्ते—सत्य । निरूढ सम्बन्धेन द्वित्वे लक्षणासम्भवस्तथाऽपि सा किं "सुपां सु" इत्यनुशासनविहिततया निरूढलक्षणा वा स्या"द्गङ्गायां घोष" इतिवत् साम्प्रतिकी वा, नाऽऽद्य अनुशासनस्य "दृष्टानुविधि छन्दसो"त्यनेन यथैव पाठान्यदर्शन तद्विषयत्वेनैव नियतत्वात् । अन्यथा वैदिकप्रमाण प्रमितमात्रस्य दृष्टपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रवृत्त्यापत्ते । अतश्छान्दसविधे पठितमात्रविषयत्वा द्विकृतावतिदिष्टमन्त्रे अप्रवृत्तेनाऽनुशासनिकनिरूढलक्षणया द्वित्वोपस्थिति ।८।२।४।

॥ नान्त्य ॥ अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाङ्गीकारे अनुशासनवैयर्थ्यापत्ते अस्तु वा सा । तथाऽपि प्रकृतौ यथा ह्यथा एकत्वोपस्थितेर्न तथा विकृतौ द्वित्वोपस्थितिरिति प्राकृत हृतिबाधाऽसहारकस्य बहुवचनस्याऽपि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन प्राकृतवचनलोपासम्भाव । [illegible] शब्दप्रयोगे किमित्य वाचकं पद प्रयोक्ष्यामह इति न्यायात् । अतएव द्वित्वोपस्थित्यर्थम्

एवं नीवारपदघटितमन्त्रा अपि. प्रतिनिधौ मुख्यस्थानापत्त्यतिदेशे प्रमाणाभावात्। न च नीवारगतव्रीह्यवयवादौ व्रीहित्वजाते: प्रमाणाभावेन तत्र कथं व्रीहिपदप्रयोगः। पुरोडाशप्रकृतित्वस्य पदार्थत्वेन व्रीहिपदवाच्यव्रीहित्वजातेः प्रकृतित्वायोगे व्रीहिपदेन लक्षणया व्रीहित्वसाधनताक्षिप्तसाधनताकत्वसम्बन्धेन व्रीह्यवयविन इव तदवयवानामप्युपादानेन नीवारगतव्रीह्यवयवानामपि प्रकाशनोपपत्तेः। व्रीहिभिर्यजेतेत्यनेन हि व्रीहित्वजातेः साधनता शब्देनोच्यते तदाश्रयावयविनस्तदवयवानाञ्च साधनता त्वर्थादाक्षिप्यते इत्युक्तं तृतीये।

वस्तुतः पुरोडाशस्य व्रीह्यवयवतण्डुलप्रकृतित्वस्यैव सत्त्वेन व्रीहिपदेन व्रीह्यवयवानामेव लक्षणाच्च। सोमत्वादिकं त्ववयवावयविवृत्तिजातिरिति पूतीकगतसोमावयवेष्वपि साऽस्त्येव पूतीकगतविजातीयावयवबाहुल्यात् तु सा नाऽभिव्यज्यते। अतस्तत्राऽपि नोहः। यदि हि नीवारत्वादिना नीवाराणां प्रतिनिधौ साधनत्वं भवेत् तदा तेषां साङ्गप्रधानकरणत्वासम्भवे कर्मविध्यावित्तानां संस्कारं ध्रुवतरप्रवृत्तिकतया समानविधानत्वाभावान्नवेदपूर्वः।

वस्तुतस्तु तदाऽपि नीवारेषु व्रीहिधर्मातिदेशे प्रमाणाभावः। तथाऽपि व्रीहिकार्यापन्नत्वे लौकिकधर्मग्रहणेनैव तेषां निराकाङ्क्षत्वाद्यूपावटस्तरणबर्हिर्योर्वाऽतिदेशकल्पनानुपपत्तेः। अन्यथा यूपावटस्तरणेऽपि बर्हिःसाध्यत्वसादृश्यादतिदेशापत्तेः। फलचमसे तु "तमस्मै भक्षं प्रयच्छे"दिति लिङ्गादेवातिदेश इति वैषम्यम्। यदि तु द्रव्यमात्रासम्भवे कर्मविधिमात्रालोचनयैव संस्कारविधिभ्यः पूर्वमेव

मुत्कर्षे प्रमाणाभावात्। विभक्त्युपात्तलिङ्गसंख्यान्वयित्वरूपसत्त्व-
समाख्यानुरोधेन पार्ष्णिकान्वयवेलाया लिङ्गसंख्यादेः प्रातिपदि-
कार्थे प्रत्ययप्राधान्येनैवाऽन्वयाच्च। नचैवं लिङ्गाद्यनुरोधेन प्रधान-
भूतपशुतदितरपदसङ्कोचस्याऽप्यनापत्तिः गुणभूतानुरोधेन प्रधान-
भूतस्य सङ्कोचेऽपि प्रकरणादिबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात्।
सङ्कोचे अवर्जनीयतया नान्तरीयकसन्निधिबाधेऽपि उत्कर्षे नास्य
प्रयोजकत्वाभावेन तद्बाधस्याऽन्याय्यत्वाच्च। यूपादिपदानान्तु गुण-
त्वाभावात् तदतिरिक्तेतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वा-
भावाच्चोत्कर्ष इति वैषम्यम्। प्रकृते तु पशुपाशकर्मकोन्मोचन-
मात्रप्रकाशनस्यैवोपयोगित्वात् संख्यायाः स्वरूपेण प्रकाशना-
नपेक्षत्वात् संख्यावाचकपदवैयर्थ्यपरिहाराय तस्य पाशसंख्या
प्रकाशनोपयोगकल्पनेऽपि नेतरपदानां तदतिरिक्तेन प्रकृतोप-
योग्यर्थप्रतिपादकत्वमिति विशेषः। अतएव बहुवचनं "सुपांसु"
इत्येव स्वगतबहुत्वाश्रयीभूतपाशावयवजन्यपाशरूपावयविद्वित्व-
सत्त्वेऽनेकत्वसामान्यमेव।

एवञ्च फलमुखत्वाद्वियमशिष्टोऽपि विकल्पो न दोषायेति
ध्येयम्। इतरथोत्कर्षपक्षेऽपि एकवचनान्तमन्त्रस्योहेन पशुपाश-
कायामप्यायाविव कृतपशुष्वपि बहुवचनान्तत्वोपपत्तेस्तत्पाठक्रम-
स्वत्वमात्रमिति रूपं सर्वं स्यात्। ८। ३। ६।

॥ अपूर्वं ॥ अतएव दर्शपूर्णमासयोः "पत्नीसन्नह्य"स्येकवचनान्तो
प्रत्यागतपत्नीकप्रयोगार्थं द्विवचनपत्नीकप्रयोगयोरप्रतिरेकेण प्रयो-
रूप्य। न च लिङ्गैकपत्नीकप्रयोगगत मन्त्रोऽहं द्विबहुपत्नीक-

व्यामज्यवृत्तित्वकल्पने प्रमाणाभावादन्यथासर्व्वप्राणिसाधारण्येनैकचक्षुःकल्पनापत्तावस्मादिष्टसिद्धापत्तेः प्रत्यधिष्ठानं नानैवेन्द्रियम्। तच्च प्रमाणान्तरवगात्तैजसाटोत्यन्यदेतत्। तत्र पक्षोन्यायेनैकत्वस्य प्रत्येकव्यक्त्यभिप्रायेणाऽपुत्रयपर्सेरनूह एव।

वस्तुतस्तु गोलकाधिष्ठितस्य सूर्यगमनासम्भवात् ततो निर्गतस्यैवात्र चक्षुःपदेनाभिधानं। न च पर्य्यन्तिकरणोत्तरमेवाभिप्रेयणात् तदानीञ्च चक्षुरादीनां गोलकस्थत्वात् निर्गमनमिति वाच्यम् अनन्तरभाविसम्पादनफलस्यैव पूर्व्वमुच्यमानत्वेन बाधकाभावात्। अतश्च निर्गतस्य चक्षुषः प्रदीपप्रभावदनेकत्वेऽपि ममर्गेणैकीभावात् प्रकृतावेकवचनं निर्व्वाह्यम्। ततश्च विकृतावपि तथैव सम्भवादनूहः। न हि निर्गतचक्षुषा प्रदीपानामिव भिन्नदेशावस्थानस्यैवकल्पनानैकीभावः। एकमोलकनिमीलने तत्पुरःप्रदेशावस्थितघटादेर्गोलकान्तरस्थितचक्षुषा दर्शनेन निर्गतचक्षुषो विस्फारणकल्पनादेकीभावोपपत्तेः। अत्र च तैजसत्वादिवच्चक्षुष्ट्वादिकमपि अवयवावयविवृत्तिजाति। तेन तत्तद्गोलकस्थितनतच्चक्षुर्भिरारब्धोवयव्यऽपि चक्षुरेवेति नोक्तप्रसक्तिः। एवं घ्राणपदवाच्येन्द्रियेऽपि बोध्यम्। शरीरं तु यद्यपि नैकीभावसम्भवस्तथापुच्यमानस्य कारणीभूतसूक्ष्मपृथिव्यालयापरपर्य्यायगमनस्य प्रत्यक्षबाधितत्वात् प्रकृतावेव स्तुत्यर्थमुच्यमानतया असमवेतार्थकत्वादनूहो द्रष्टव्यः। शरीरे ऊहं केचिदिच्छन्ति। ८। ३। ११।

॥ एकधा ॥ तत्रैव ग्रन्थे "एकधाऽस्य त्वचमाच्छता"दिति श्रुतम्। तत्र षष्ठ्यन्तं द्वितीयान्तञ्च पशुगणे द्विबहुवचनान्तेनोहितव्यमित्य

प्रत्येकव्यक्तिगतत्वेनैवैकवचनस्य प्रयोगोपपत्तेर्नोहः। नचैवमनेकपाशकाया विकृतावपि एकवचनान्तस्य पाशमन्त्रस्योहानापत्तिः एकवचनस्य प्रत्येकव्यक्तिगतत्वेनोपपत्तेरिति वाच्यम् प्रकृतौ पाशस्यैकत्वेन तद्गतैकवचनस्याऽपूर्व्वसाधनहत्तिपरिच्छेदकीभूतसंख्याप्रकाशकत्वेन विकृतावपि तादृशसंख्याप्रकाशनार्थमूहावश्यम्भावात्। प्रकृते त्वेकवचनस्य प्रमाणान्तरावष्टतपशुनेकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रकृत्यवगतेर्न परिच्छेदकीभूतसंख्याप्रकाशकत्वमिति वैषम्यम्। ९। ३। ८।

॥ अध्रिगुः ॥ एव क्रतुपशुना समानविधानत्वपूर्व्वपक्षे "प्रास्मा" इत्यध्रिगुप्रैषएकवचनान्तएव तेषु प्रयोक्तव्यः। पशोरब्दवत्। तत्वेकवचनानुरोधेनैकपशुक एव दैक्षादौ एकवचनस्य प्रत्येकव्यक्त्यभिप्रायेण गणेऽपि तुल्यैव सम्भवात्। अतएव यस्य पुल्लिङ्गस्य श्रुत्या स्त्रीपुंगणे असम्भवत्वात्ऽत्यन्तनिषिद्धलक्षणाया प्रमाणाभावात्स्त्रैपोवर्क्-पुंपश्वेव सङ्कोच इति वैषम्यम्। असमानविधानत्वसिद्धान्ते तु "प्रास्मा" इत्ययं वचने लिङ्गे च "प्रैभ्यो स्वाभ्य भरतादि"त्येवमूहितव्य एव। तदेतत्तार्त्तीयस्य समानविधानत्वविचारस्य प्रयोजनमात्रकथनम्। ९। ३। ९।

॥ प्रतिनिधौ ॥ यत्र तु अवयवसादृश्येन प्रतिनिधिनियमो यथा नीवारपुरोडाशे तत्र व्रीह्यादिशास्त्रेणैव नीवारादिगतव्रीह्यवयवसमानजातीयावयवानामपि साधनत्वावगतेः संस्कारविधीनां मुख्यद्रव्यसमानविधानत्वस्य तृतीये स्थापितत्वात् "व्रीहीणां मेध" इत्यादावपि यथाविधि प्रवर्त्तते। न तु नीवाराणामित्येवमूहितव्यः।

धारावाहिन सहकार्य्यान्तरैर्वैलक्षण्येन सम्भवति। तस्य समुदितत्वकल्प विशेष्यतावच्छेदकोक्तत्वाऽपि तादृशबोधजनकत्वात्। अतश्च तादृश बोधे बाधितविषयत्वप्रतिसन्धानस्याऽपि उक्तनिर्णये सहकारि कारणता वाच्यमिति। अधिकसामग्रीकत्वात् प्रकृतिसङ्गावबाधापत्ति। अत्र प्राकृतसहकारिकारणमात्रेण प्रत्येकत्वविशिष्टैकनिरूक्त बोधजननार्थं एकधापदस्य यावत्त्वचमभ्यास आवश्यक एव। सोऽयं अभ्यासमात्रेण प्रकृतितोऽन्यथाभावादूह इति व्यवह्रियते न तु अयं वस्तुत संस्कारोहादिसाधारणोहलक्षणाक्रान्त इति धेयम्।८।३।१२।

॥ मेधपतित्वम् ॥ तत्रैव प्रैषे "उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेध"मिति श्रुतम्। केषाञ्चित् तु शाखिनां "मेधपतये मेध"मिति। तत्र न तावच्छाखाभेदेनाऽत्र मन्त्रभेद। एकदेशवैरूप्येऽपि शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञानबलेन तदैकत्वावगते। ततश्च तदर्थोऽपेक्षक एव वाच्य। तेन मेधस्य पशो पतिर्यजमानो देवता वा अथो वाच्यो न तूभय न च मेधपतित्वस्य शक्यतावच्छेदकस्यैकत्वात् तदवच्छिन्नोभयाभिधानेऽपि न दोष इति वाच्यम् तथात्वेऽपि इतरपदानां ततत्तदर्थघटितसम्बद्धवाक्यार्थविषयकविलक्षणबोधद्वयजनकत्वानुपपत्ते। तथा हि यजमानपक्षे यजमानाय यो मेध पशुर्भागसाधनत्वेनाऽऽसीत् त मेध्या अयम् ऋत्विज दूरो यद्वा दारश्चोत्तामोत्करयोर्मध्य उपनयत स्वोयदक्षिणां यजमाननिष्ठ फल वा आशासाना सन्त इत्यर्थ। देवतापक्षे देवतायै मेध पशुमाशासाना मेध्या भवन्तस्त दुर प्रति उपनयतेत्यर्थ।

एवञ्च विकल्पोऽपि फलमुखत्वाच्च दोषाय। प्रयोजनं पूर्वपक्षे सत्त्वे द्वयोरप्युपग्रहो विकल्पश्च अर्थद्वयानुसन्धाने सिद्धान्ते त्वग्रिमाधिकरणे वक्ष्यते। ८। ३। १३।

॥ नियमो वा ॥ यत्र देवतात्वमेकमधिष्ठानन्तु एकं बहु वा तत्र द्विवचनान्तस्याऽधिष्ठानपरत्वात् तदनुरोधेनोहः। एकवचनान्तस्य त्वविचार एव देवतात्वस्यैकत्वात् यथा "वायव्यं श्वेतमालभेत" "वैश्वदेवं धूम्रमालभेत" "स एतान् पशूनादित्येभ्य आलभेते"त्यादौ। अत्र वायुरेकमधिष्ठानं विश्वशब्दस्य समस्तवाचित्वाद्बहवो देवा अधिष्ठानम्। यद्यपि च शब्दस्यैव देवतात्वात्तच्छब्दानां बहुत्वं। तथाऽपि देवत्वादिव्यवहारसिद्धये कल्प्यस्य स्वीकारस्याऽप्यर्थनिष्ठस्यैव कल्पनात् स्वीकारघटितसम्प्रदानत्वस्याऽप्यर्थेन एवोपपत्तेरर्थ एवाऽत्राऽधिकरणे परम्परया देवतात्वाधिष्ठानपदेनोच्यत इति तद्बहुत्वोपपत्तिः। एवमादित्यानामपि बहूनामेवाऽधिष्ठानत्वं बहुवचनानुरोधात्। न च शब्दस्य देवतात्वपक्षे सत्युपपात्तदेवतात्वे प्रातिपदिकांशस्याऽऽदित्यपदस्यैवाऽन्वयात् तस्य चैकत्वेन बहुवचनेनाऽप्येकत्वस्यैव लक्षणात् कथमधिष्ठानानेकत्वमिति वाच्यम् सत्यामपि लक्षणायां लक्षकान्वयवाचकपदबहुत्वसम्बन्धेनैव लक्षणादाश्रयरूपेऽर्थे बहुत्वोपपत्तेः। अतश्च तत्र देवताधिष्ठानसंख्यानुरोधेन द्विवचनान्तस्योहः। देवतात्वन्त्वेकम् अनेकत्वे प्रमाणाभावात्। आदित्यस्य इत्यत्राऽपि न बहुत्वं विभक्त्युपात्तदेवतात्वान्वयि अपि तु बहुत्वस्याऽधिकमर्थसम्बन्धं गृहीत्वा तत्तदुपहितैकत्वमेवेति तत्राऽपि देवतात्वैकत्वम्। अस्तु वा बहुवचनबलात् तत्र देवतात्वभेद इति न

विवादम् एकधाशब्दस्य त्वविकारोऽथ वा अभ्यासात्मको भाव इह इति चिन्तायां एकधाशब्दस्य एकप्रयत्नसाध्यत्वे एकदेशकालत्वे च लौकिकप्रयोगेण नानार्थकत्वावगतौ प्रकृतावेकत्वाच्चचोदितस्य एककालतो वा साहित्यरूपार्थोऽसम्भवेन तत्र साकल्यसम्पत्तये एकप्रयत्नसाध्यत्वस्यैव ग्राह्यत्वेऽपि विकृतावभ्यासाभ्यामसत्यने प्रमाणाभावादेकधाशब्दनार्थान्तरभूत देशतः कालतो वाऽनेकत्वच्छेदन साहित्यमेव शक्त्या प्रकाश्यत इत्यविकारादनूह । यदि तु उपकार एवभावेन पदार्थानामतिदेशात् प्रकृतौ यस्य शब्दस्य योऽर्थो निर्णीत स्तस्य तदर्थप्रभावेनव प्राप्यवगतेर्नार्थान्तरप्रकाशनस्य प्रयोजनत्व कल्पनमुपपत्तिमदिति विभाव्यते । तदाऽस्तु एकप्रयत्नसाध्यत्वमेव विकृतावपेकधाशब्दार्थ । तथाऽपि तु नाऽभ्यास । सहृदयरिते-नैकधाशब्देन सर्वत्वगतैकप्रयत्नसाध्यच्छेदनकत्वस्य वक्तुं शक्यत्वात् । यद्यपि च संहितानां सर्व्वासां त्वचामेकप्रयत्नसाध्यच्छेदनकत्वं बाधितम् तथाऽपि प्रतिप्रधानं गुणावृत्तियुक्तत्वादुद्देश्यानां त्वचां साहित्याविव क्षणाच्च प्रत्येकमेव सम्पादितत्वात्सैकप्रयत्नसाध्यच्छेदनकत्वस्या प्ययोधोपपत्ते नार्थोऽभ्यासेनेति प्राप्त ।

प्रकृतौ याद्दशनिर्णयं प्रति याद्दशपदज्ञानस्य याद्दशसामर्थ्योपस्त्वे फलोपधायकता विकृतावपि ताद्दशसामर्थ्योपस्त्व एव ताद्दशपद ज्ञानस्य ताद्दशनिर्णयोपधायकत्वं वाच्यम् इत्यया प्रकृतिवद्भावानुप पत्ते । तदिह प्रकृतौ एकधाशब्देन सहकार्यान्तरनैरपेक्ष्येणैकत्वयुक्तं निर्णायमानच्छेदकोत्तत्त्वविशिष्यैकप्रयत्नसाध्यच्छेदनकत्वप्रकारक पर्य्यासिसमर्थका निर्णयोऽजनित । न चाऽर्थौ विकृतौ सहृदयरितेनैक

# भाट्टदीपिका।

## नवमाध्यायः।

### चतुर्थपादः।

॥ षड्विंशति ॥ तत्रैव पैत्रे "षड्विंशतिरस्य वङ्क्रयस्तानुष्ठ्योच्यावयतादिति" श्रुत तस्याऽस्य मन्त्रस्य कारणमन्त्रत्वाभावेऽपि समवेतप्रकाशकत्वसम्भवे पशुसमवेतार्थत्वस्याऽन्याय्यत्वादविकार एव पशुगण इति तावदसाधकं विकारोऽपि कीदृग्विध इति चिन्तायाम्—

प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावादश्रुतपदान्तरकल्पनानुपपत्तेर्यावत् पशुगतसमस्तसंख्याप्रकाशनार्थं षड्विंशतिरस्येति पदद्वयावृत्तिरेव। अतएव प्राकृतपदबाधे प्रमाणाभावान्न क्वचिदपि एकवचनोहः। "अदितिः पाशं मेधपतये मेध"मित्यादावपि अभ्यासेनैव सर्वपाशादिप्रकाशनोपपत्तेः। अश्रुतद्विवचनाद्यध्याहारापेक्षया श्रुतस्यैवाऽभ्यासकल्पने लाघवाच्च। अन्यथा द्विधा विधेत्येवमूहेनैव प्रकाशनोपपत्तौ एकधापदस्याऽप्यभ्यासानापत्तेः। न च एकत्वादीनां प्रकृतावेकत्वादिनाऽनुद्देश्यत्वादपूर्वसाधनीभूतसंख्यात्वेन प्रकाशने च विकृतावपि पशुबहुत्वादेरपूर्वसाधनीभूतस्य प्रकाशनार्थं बहुवचनादिप्रक्षेपावश्यम्भाव इति वाच्यम्। "आग्नेयं कृष्णग्रीवं सौम्यं बभ्रु"मित्यादौ पश्वेकत्वस्यैव तत्तदपूर्वसाधनत्वेन बहुत्वस्याऽविहितत्वात् प्राजापत्यानित्यादावपि यागबहुत्वार्थमेव बहुवचनोपादानेनाऽतिदेशप्राप्तस्य पश्वेकत्वस्यैव

वेस्तु देवतापक्षे देवतायै यजमानाशासमाना भवन्तो मेधपास्तदीया दुरो यज्ञद्वाराणि हृदयादीनुपनयतेत्यर्थ इत्याहुः । सर्वथा विलक्षणबोधद्वयजनकत्वानुपपत्तेरेकरूपएवाऽर्थो वाच्यः । न च बोधद्वयजनकत्वे सकृच्छ्रुतस्य शब्दस्य सकृदर्थप्रत्यायकत्वमिति नियमभङ्ग एव दूषकताबीजं न च तदत्राऽस्ति शाखाभेदेन द्विःश्रुतस्य सकृच्छ्रवणाभावादिति वाच्यम् तथाऽपि लिङ्गकल्पितश्रुतेरनेकत्वकल्पनागौरवभिया एकस्यैवाऽर्थस्य वाच्यत्वात् तदिह किंपरत्वमिति चिन्तायां देवताया विपक्षाद्यभावेन स्वामित्वापरपर्यायपतित्वानुपपत्तेर्यजमानपरत्वमेव । न च तस्यैकत्वेन द्विवचनानुपपत्तिः छत्रिन्यायेन तदुपपत्तेः ।

वस्तुतस्तु इयत्योर्व्यासज्यवृत्तित्वसूत्रेत्याद्यवधातीतिवदेकवचनं पक्षोयजमानाभिप्रायेण च यजमानावितिवद्द्विवचनम् । अतएवैकपक्षोक्तप्रयोगे द्विवचनान्तएव मन्त्रोऽन्यत्र त्वेकवचनान्तएवेति नाऽस्मन्मते विकल्पोऽपीति प्राप्ते,—

यजमानपरत्वे पशोराशासनस्य तावत् भिन्नत्वेनैव वैयर्थ्यं दर्शितादीनां चाऽमृतानां कल्पनाच्च तदाशासनमपि सम्भवि । पशोर्देवमादिव्यवहारसिद्धार्थं देवताया अपि स्वीकारान्यथासम्भवस्य तृतीयभाषितत्वात् तमादाय मेधपतित्वोपपत्तेर्देवतापरत्वमेव । वचनन्तु तदुक्तरीत्येव देवतात्वस्य अग्नीषोमयोर्व्यासज्यवृत्तित्वादेकत्वोपपत्तेरधिष्ठानभेदेन च द्वित्वोपपत्तेर्नाऽप्यनुपपन्नमेव । कर्तृत्वाय च देवतात्वेऽपि मेधपतित्वं सामानाधिकरण्यादेवोपपद्यमिति न काचित् क्षतिः ।

युक्तम्। तत्राऽपि षड्विंशतिपदिके अन्यथात्वे प्रमाणाभावात् षड्विंशती षड्विंशत इत्येवं वचनद्वयोक्तः। संख्याप्रधानत्वाच्चास्य वाक्यस्याऽयमर्थो निर्णीयते। तथाहि। सर्व्वत्र द्वौ त्रय इत्यादयः संख्याशब्दाः संख्येयप्रधाना एव विंशत्यादयस्तु संख्याप्रधानाः। दृष्टार्थता च तत्प्राधान्ये अन्यूनयोः पार्श्वयोरवद्यतीति वचनात् साकल्यावगमेन तत्प्रकाशनव्यङ्ग्यत्वात् अतः प्रधानभूतषड्विंशति-प्रातिपदिकेनाऽन्यथाभावः। नचैवं विंशतिर्गवामितिवद्वंक्रीणां गुणत्वे वंक्रीशब्दस्य षष्ठ्यन्तत्वापत्तिः। संख्याप्राधान्येऽपि "देवदत्ता-दयःपर्षत्" "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः" इत्यादौ लक्षणया संख्येयशब्दस्य संख्यासामानाधिकरण्यदर्शनेन वंक्रिसलक्षणया वंक्रिशब्दस्याऽपि सामानाधिकरण्योपपत्तेः।

न च लक्षणाभियैव संख्येयवंक्रिप्राधान्ये विंशतिर्गाव इति वदिति वाच्यम् तथात्वेऽपि षड्विंशतिशब्दस्य संख्येयसामानाधिकरण्य-सम्पत्तये तल्लक्षणाङ्गीकारस्यावश्यकत्वात्। नामार्थयोः पार्ष्णिका-न्वयवेलायामपि अभेदेनैवान्वय इति नियमानङ्गीकारे तु सताऽपि वंक्रीणां समवेतत्वसम्बन्धेन संख्यायामन्वयोपपत्तेर्न लक्षणा। न वंक्रिशब्दस्य वंक्रिसलक्षणया संख्याविशेषणत्वे तस्या एकत्वेनैक-वचनापत्तिः बहुवचनस्य स्वाश्रयाश्रयसमवेतवृत्तित्वसम्बन्धेनैकत्व-लक्षणार्थत्वात्। तव मतेऽपि संख्येयप्राधान्ये षड्विंशतिरित्येक-वचनेन स्वाश्रयाश्रयसमवायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणाया आव-श्यकत्वाच्च। नचैवं विनि मनाविरहः वंक्रिपदे जघन्यत्वस्यैव नियामकत्वात् अतश्च प्रधानभूतषड्विंशतिपदे अन्यथाभावा-

तद्दिष्टोदाहरणं किन्त्वग्रिमसूत्रएव। तदेतत् पूर्व्वाधिकरणस्य प्रयोजनमात्रकथनमिति मन्तव्यम्। ९।३।१४।

॥ अर्थान्तरे ॥ यत्र तु देवतात्वान्यनेकानि अधिष्ठानं त्वेकमनेकं वा तत्रैकवचनान्तस्याऽप्यूहो यथा "त्वाष्ट्रं पात्नीवत अग्नये पावकाय पशुमालभत"। "आग्नेयं कृष्णग्रीवं सारस्वतीं मेषीं बभ्रुं सौम्यं" स्यादौ। अत्र त्वष्टृपत्नीवतोरग्निपावकयोश्चाधिष्ठानैकत्वेऽपि तद्धितचतुर्थीभेदाद्देवतात्वभेदः। तृतीयोदाहरणे तूभयभेदः। अतस्तत्र उभयोरपि मन्त्रयोस्तत्तत्संख्यावशेनोहः। न चाऽनयोर्मन्त्रयोरर्थद्वयपरत्वदर्शनोहाङ्गीकारे प्रकृतौ विकृतौ वा देवतात्वतदधिष्ठानरूपार्थभेदात् समुच्चयापत्तिरिति वाच्यम्, उभयोरप्युभयार्थप्रतिपादकत्वेन विकल्पोपपत्तेः। एकवचनान्तो हि देवतात्वे परम्परासम्बन्धेन मेधपतित्वं वदन् परम्परासम्बन्धघटकतया अधिष्ठानमप्युपस्थापयति। अग्नीषोमत्वादिना तदुपस्थितिस्तु मेधपतिपदादस्य। द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्वं वदन् स्वीकाराख्यसम्बन्धस्य देवतात्वाधीनत्वाद्देवतात्वमप्युपस्थापयतीति सत्यपि विषयताभेदे उभयोरप्युभयोपस्थापकत्वाद्विकल्पोपपत्तिः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्य तृतीयपादः।

---

गात्रा वयुना कृणोत पर्व्वपरुरनुघुष्या विशस्ते"ति । अयञ्च लिङ्गप्रकरणाभ्यां वक्रिविशसनप्रैष एव विनियुज्यते न तु याज्यादौ अतश्चापूर्वाङ्गकत्वेनाऽतिदेशप्राप्तस्याऽध्रिगोरश्वविषये वक्रिप्रकाशनसामर्थ्ये बाधादश्वस्याऽयं मन्त्रोऽन्ययोऽस्तु द्विपश्वादनयोर्वक्रय इति समासस्तथापि प्राप्तम् ।

तत्र दशमपर वचनं "न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया"दिति । तदनेन किं विधीयत इति चिन्तायां न तावदत्रप्रतिषेधविधिः । स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात्तादृक्प्रतिषेधो वा । उभयथाऽपि विहितप्रतिषेधे विकल्पापत्तेरसम्भवः । अन्य षडशीतिलक्षणापत्तिश्च तत्प्रतिषेधे च षडशीतिरित्येव समासस्यैव प्राप्त षड्विंशतिपदयुक्ताऽध्रिगुप्रैषस्याऽप्राप्तत्वेन तस्याऽपि विधाने वाक्यभेदापत्तेश्च षड्विंशतिपदेन षडशीतिपदोपेताध्रिगुप्रैषलक्षणया तस्याऽनुवादत्वे च लक्षणैव दोषः । अतो न गिरागिरेतिवञ्च चतुस्त्रिंशदिति निषेधानुवादः । षड्विंशतिरिति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे दशापदवद्विधानं । तद्देव च निषेधानुवादबलाच्चतुस्त्रिंशत्स्थानापन्नत्व विधानबलाच्च मन्त्रान्तर्गतषड्विंशतिपदेनाऽश्ववक्रिसङ्ख्यालक्षणायामपि न दोषः ।

नचैवकारेण विधिशक्तिप्रतिबन्धात् षड्विंशतिरित्यस्य विधित्वमिति वाच्यम् एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात् । "अत्र ह्येवाऽवपन्ती त्यादौ तद्युक्तेऽपि विधिदर्शनाच्च । नचैवकारेण स्वार्थ एव विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध इति वाच्यम् षड्विंशतिपदस्यैव विधिसम्बन्धित्वेनैवकारस्यैवाऽयोगव्यावृत्तिरूपं फल

तत्पूर्व्वसाधनत्वाच्च । अतश्च तत्प्रकाशनार्थमावृत्तिरेव श्रुतपदस्य युक्ता । न तु सूर्य्यादिपदवत् पदान्तरप्रक्षेपः । यत्तु मूले एतत्-पक्षसाधनाय षड्विंशतिसंख्या पशूभयसम्बन्धप्रधानमिदं वाक्यं प्रति-पशुभेदेन तत्सम्बन्धं प्रकाशयितुमभ्यसनीयमिति युक्तिरुपन्यस्ता । सा प्रकृतस्य पदार्थस्य गुणत्वेन प्राधान्यशङ्कानुपपत्तेर्वाक्यार्थरूपस्य चाऽ-साध्यत्वेन सुतरां तदनुपपत्तेः प्राधान्येऽपि च तस्य प्रतिपशूद्देशेनाऽपि प्रकाशनोपपत्तेरभ्यासे प्रमाणाभावादुपेक्षिता । अत उक्तयुक्त्यैव पद-व्याख्यानं प्रसाध्य इति प्रथमः पक्षः ।

द्वितीयस्तु पक्षः एकप्रयोगविधिपरिगृहीतानामनेकेषां साङ्गानां यागानां यौगपद्यावगतेरर्थप्रकाशनकार्यस्याऽपि यौग-पद्यावगमात् तदनुरोधेन युगपदनेकप्रकाशकमन्त्रस्याऽवश्यकत्वात् क्वचिच्छ्रूयमाणस्यैवाऽभ्यासः । "अदितिः पाश"मित्यादौ तु गुणानु-रोधेन प्रधानप्रातिपदिकस्याऽभ्यासे प्रमाणाभावादपि नाऽसौ अपि तु बहुवचनाद्यूह एव ।

यद्यपि च बहुत्वं न कस्यचिदङ्गं तथाऽपि पशुप्रातिपदिकेना-ऽनेकपशूपादाने साधुत्वार्थं तत्प्रक्षेपस्यैवाऽवश्यकत्वात् । सर्वैक-वचनान्तपशूपादानवत् प्रत्येकमत्राभिप्रायेणैकवचनप्रयोगे तस्य पशोरेकत्वानेकत्वसन्देहजनकतया निर्णायकत्वाभावात् । एकनियतत्वाच्च साधकत्वेनाऽप्रयोज्यत्वादतएव "द्विधामयोद्भवे"त्याद्युदाहृतिकारेऽपि एकत्वाच्च प्रयवदवमात्रपदमनन्यगत्यासम्भवतया निर्णायकत्वा-भावादन्यथा एकधापदेऽभ्यासाङ्गीकरणम् । प्रकृते तु विवक्षि-तार्थविषये संशयजनकत्वाभावाद्यौगपद्यसम्पत्त्यर्थं ऊहाङ्गीकरणमेव

गात्रा वधुना क्षणात परुष्परुरनुघुष्याविशस्ते"ति । अयञ्च लिङ्गप्रक रणाभ्यां वक्रिविशसनप्रैष एव विनियुज्यते न तु याज्यादौ अतश्चा पदशिक्षनाऽननाऽलिङ्गप्रामस्याऽध्रिगोरश्वविषये वक्रिप्रकाशनमात्राधि बाधादश्वस्याऽयं मन्त्रांशयोऽस्तु द्विपञ्चाशदनयोर्वक्रय इति समान दस्यपि प्राप्तम ।

तत्रेदमपरं वचनं "न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया"दिति । तदनेन किं विधीयत इति चिन्तायां न ताव दृष्टप्रतिषेधविधिः । स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात्तादृक्प्रतिषेधो वा । उभयथाऽपि विहितप्रतिषेधे विकल्पापत्त रसम्भव । अन्त्य कटगलक्षणापत्तिश्च ऋक्प्रतिषेधे च षडशीति रित्येव समासस्यैव प्राप्त षड्विंशतिपदयुक्ताऽध्रिगुप्रैषस्याऽप्राप्तत्वेन तस्याऽपि विधाने वाक्यभेदापत्तश्च षड्विंशतिपदेन षडशीतिपदो पेताध्रिगुप्रैषलक्षणया तस्याऽनुवादत्वे च लक्षणैव दोष । अतो न गिरागिरत्विवच्च चतुस्त्रिंशदिति निषेधानुवाद । षड्विंशतिरिति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे इदापदवद्विधान । तद्देव च निषेधानुवादबलाच्चतुस्त्रिंशत्स्थानापन्नत्व विधानबलाच्च मन्त्रान्त र्गतषड्विंशतिपदनाऽश्ववक्रिसङ्ख्यालक्षणायामपि न दोष ।

नचैवकारेण विधिशक्तिप्रतिबन्धात्र षड्विंशतिरित्यस्य विधित्व मिति वाच्यम एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात् । "पद श्नो दाऽवपन्तो"त्यादौ तद्युक्तेऽपि विधिदर्शनाच्च । नचैवकारेण स्वार्थ पर विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध इति वाच्यम् षड्विंशतिपदस्यैव विधिमङ्गीकृत्यैवकारस्यैवाऽयोगव्यावृत्तिरूप फल

विंशतिरश्रोवङ्क्रिरनपड्योतिरदोपेताधिगुप्रैषलक्षणया तस्यैव प्रति प्रसव। साऽपि न विधेय। एवकारेणाऽनुवाद्यत्वावगमात्। तत्प्राप्तिश्चेत्थम्। "न चतुस्त्रिंश" दित्यत्र वैशेषिकमन्त्रप्रतिषेधविधि। चतुस्त्रिंशत्पदेन लक्षणया तदाऽऽदिसकलमन्त्राभिधानात्। तस्मात्-प्रतिषेधे तत्र षड्विंशतिपदस्यास्वभावेन "षड्विंशतिरित्येव ब्रूया" दित्यस्याऽनुवादत्वानुपपत्ते। अतोवैशेषिकमन्त्रप्रतिषेधपक्षाऽश्र यतत्र "न तौ पशौ करोतो"तिवद्विहितप्रतिषिद्धत्वाद्विकल्प। अभाव पक्षे च अतिदेशप्राप्तस्य षड्योनिपदोपेतस्याऽभिगोरेव न्यायेन प्राप्त त्वात् षड्विंशतिरित्येवेत्यनुवाद।

आश्वलायनमते तु "षड्विंशति षड्विंशतिश्चतुस्त्रिंशदेषा वक्रय" इत्यवदाकारकोऽभिगुप्रैषस्य षड्विंशतिपदेन लक्षणात्तस्यैवाऽयमनुवाद। एतेनैवकारयुक्तवाक्येनोक्तविधाऽभिगुप्रैषस्यैव प्रतिप्रसवविधि। वाचनिकेन चाऽभिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधात् चतुस्त्रिंशदिति निषेधानित्यानुवाद। वैशेषिकमन्त्रस्य चाच स्तोमादौ विनियोग च वैयर्थ्यमपि। एवञ्च विकल्पोऽपि माऽष्टदोषदुष्टोभविष्यति। एवकारस्याऽयोगव्यावृत्तेरन्ययोगव्यावृत्ते र्वाऽनुवादो भविष्यतीत्यपास्त। निषेधपूर्व्वकैवकारस्थले एवकार मन्त्रस्याऽनुवादत्वप्रतीते। तादृशस्थले यच्छब्दादिवदेवकारस्याऽपि स्वसमभिव्याहृतविधिप्रतिबन्धकत्वात्।

अतएव उपवासावतस्तोत्युक्ते उपवासानेव कुरु न तु प्रवा गच्छेत्यत्र प्रवासनिवृत्तिरेव विधेया न सूपवास इत्यनुभवसिद्धम्। य तु निषेधपूर्व्वकता तत्राऽनुभववलादेवकारमन्त्रस्याऽपि विधाने

मादाय चतुस्त्रिंशत्पदस्याहृत्याऽन्ययोगव्यावृत्तिरूपं फलमादायैव वाऽनुवादत्वोपपत्तेः। अतश्चाश्वे "षड्विंशतिर्वाजिनो देवबन्धो" रिति मन्त्र इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते।

न तावदत्रैवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादो वैयर्थ्यापत्तेः, पदमात्रेण सत्त्वानुपपत्तेश्च अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धेः पुनरनेन करणे सुतरां वैयर्थ्याच्च। नित्यविधिविधेवकारार्थविधौ चाऽयोगव्यावृत्तस्यापत्तेः षड्विंशतिपदस्य पक्षेऽप्यप्राप्तत्वादयोगव्याऽप्रसक्तत्वेन विधानासम्भवः। षड्विंशतिपदविधानावश्यकत्वे तत एव तस्याः प्राप्तत्वाच्च। अत एव नाऽन्यनिवृत्तौ तद्विधाने विकल्पस्याऽवश्यकत्वाच्च। अत एव "ऽग्न ह्येवाऽवपन्ती"त्यादावेवकारार्थविधौ "न तौ पशौ करोती"ति तद्विकल्पापत्तिरित्युक्तं कौस्तुभे।

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता एवविधयस्याऽनुवादत्वेन वाऽनुभवसिद्धा। शब्दशक्तिवैचित्र्यस्याऽनुभवसिद्धस्याऽपह्नोतुमशक्यत्वात्। न च वशिष्ठिके मन्त्रे षड्विंशतिपदस्य प्रतिप्रसव सम्भवति। न च प्राकृतएवाऽभिनी षडयोनिपदप्राप्तौ तस्य प्रतिप्रसव तथात्वे "न चतुस्त्रिंश"दिति निषेधानुवादानुपपत्तेः। वैशेषिकमन्त्रेष्वाऽश्वाश्व प्राकृताऽभिगुबाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च। तूपरगोमृगयोर्द्वियन्त्राशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः। अतएवकाररूपतात्पर्यग्राहकानुरोधेन षड्-

रकारदर्शनाल्लोकेऽपि च रोमाणि लोमानीत्यादौ रलघटितपदयोः समानप्रवृत्तिकत्वदर्शनादुरूकपदेनोलूकाभिधानं ततश्चोलूकवद्धाववनिष्ठु मा च्छिददिति मन्त्रार्थः । ततश्च वपानिष्कासनारूकाशब्दस्योह इति प्राप्ते ।

न तावदनिष्टो मन्त्रेण लवनं निषिध्यते । हृदयादिवत्तस्य प्रविष्टेन लवनस्याऽवश्यकत्वात् । नाऽपि उलूकमारभ्यवधि लवनकाले निषिध्यते अदृष्टार्थत्वापत्तेः । अत उरूकाशब्देनाऽवयव योगेन वपाभिधानमेव वपोद्धरणकाले वपा मन्यमाना भ्रान्त्या वनिष्टु मा च्छिद्यतामित्यर्थः । वनिष्टोर्वपायोगोत्तरकाले लवितव्यत्वात् अत स्तस्य पूर्वलवनप्रतिषेधवचनं दृष्टार्थं भवति । अवयवयोगश्चोरु शब्दो विस्तीर्णवाची दीर्घश्छान्दसः । काशशब्दो मेदोवाची नामैक देशे नामग्रहणात् काशब्दोऽपि तद्वचन एव ततश्च पदद्वयमिदं समासो वा विस्तीर्णं मेदो वपाख्यं यस्य तदर्थः । न च रूढ्या योगबाधः । रेफ घटितस्य पदस्योलूकेऽपि रूढ्यभावात् । अतश्च वपानिकल्पे उरूणिका मेति पदद्वयपक्षे उरूकाणीति समासपक्षे च ऊहः कार्यः । ८ । ४ । १ ।

॥ प्रशसा ॥ तस्मैव प्रपे प्रशसामाह" इति श्रुत अथ श्रुणुतादिति मनुपश्यन् । तत्र प्रश्नमात्रेण किं कारणीभूतं प्रामं उच्यते उत प्रशस्तत्वमिति चिन्तायां प्रशसायामदृष्टार्थत्वापत्तेः प्रशसेति वसो यान्तं भकारलोपेन इत्वेन च शासनवाचिशासिशब्दश्चासि वैशासमाथ स्यते इत्यादिलिङ्गाद्विवचनं । ततश्चासिना खड्गेन वाहुच्छिन्द तेति प्रेषार्थ । यद्यपि च स्वधितिरेव पशुप्रकरणे सामान्यतश्छेदने विहितस्तथाऽपि बाहुच्छेदने सान्वर्थकोऽसिविधिरनेन न विरु ध्यते । अतश्चाश्वमेधे "शत यासताहरितच्छुरवोमयो भवन्त्व"ति

मादाय चतुस्त्रिंशत्पदव्यावृत्त्याऽन्ययोगव्यावृत्तिरूपं फलमादायैव वाऽनुवादत्वोपपत्तेः । अतएवाश्वे "षड्विंशतिर्वाजिनो देवबन्धो"रिति मन्त्रे इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते ।

न तावदेवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादो वैयर्थ्यापत्तेः, पदमात्रेण व्यावृत्त्यनुपपत्तेश्च अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धेः पुनरनेन करणे सुतरां वैयर्थ्याच्च । नियमविधिरपि एवकारार्थविधौ चाऽयोगव्यावृत्त्यभावेन षड्विंशतिपदस्य पक्षेऽप्यप्राप्तत्वादयोगस्याऽप्रसक्तत्वेन विधानासम्भवः । षड्विंशतिपदविधानावश्यकत्वे ततएव तस्याः प्राप्तत्वाच्च । अतएव नाऽन्यनिवृत्तेः तद्विधाने विकल्पस्याऽवश्यकत्वाच्च । अतएवा"ऽग्नश्चैवाऽयपत्नी"त्यादावेवकारार्थविधौ "न तौ पशौ करोती"ति तद्विकल्पापत्तिरित्युक्तं कौस्तुभे ।

वस्तुतस्तु निषेधप्रसक्तिव्यावृत्तेवकारस्थले प्रतिप्रसवरूपता ऽविरयस्याऽनुवादत्वेऽनुभवसिद्धा । शब्दशक्तिवैचित्र्यस्याऽनुभवसिद्धस्याऽपह्नोतुमशक्यत्वात् । न च वशीपिके मन्त्रे षड्विंशतिपदस्य प्रतिप्रसवः सम्भवति । न च प्राकृतत्वाऽश्विगौ षड्गोतिपदप्राप्तौ तस्य प्रतिप्रसवः तथात्वे "न चतुस्त्रिंश"दिति निषेधानुवादानुपपत्तेः । वैशेषिकमन्त्रेणाऽश्वस्य प्राप्तस्याऽश्विगुत्वाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च । तूपरगोमृगयोर्द्विपञ्चाशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव ।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः । अतएवकाररूपतात्पर्यग्राहकानुरोधेन षड्-

न्यायत्वात् क्विप्विचौ शस्त इत्यङ्गीकृत्य शासपदस्यैव शंसति छान्द समित्यापाद्य प्रथमाद्यत्वमुक्तम्। यदा तु महावार्त्तिककारस्या दृष्टप्रयोगाच्च सान्तधातौ क्विप्विचावित्येतदापाद्यमानस्वरानुगुण्या च्छस्तुहिंसायामित्यनुशिष्टस्य हि सायकस्य शसधातोर्लुप्तक्विबन्तस्य तृतीयान्तरूपाख्यानेऽपि च्छान्दसत्वकल्पनाक्षमासाधनस्वधितिकर णकत्वावगतेर्यौगिकसम्मत शासहृदविवोढोऽनुसन्धेय । ८ । ४ । ४ ।

॥ श्येन ॥ तत्रैव प्रथ "श्येनमस्य वक्षः कृणुयात्" इति श्रुतम्। तत्र श्येनपदं इवशब्दानुषङ्गेण वचनं उपमार्थमित्यविवादम्। इव शब्दार्थश्च सादृश्यमित्यपि। तच्च बहुतरधर्मैः सम्भवे कतिपयधर्मैरन्या य्यत्वादाकारविषयमेव। अतश्च वक्ष उद्धृत्य कर्त्तनादिना श्येनाकारता सम्पाद्या यष्टव्यमिति पक्षे विधिस्तु पशुवत् प्रकृतित्वनति प्राप्ते—

अवदानवाक्ये "त्र्यङ्गम्" इति श्रवणात् तस्यैव हविष्ट्वप्रतीतेर्न कर्त्तनादिना तत्राग्नि शक्यं कल्पयितुं तेन सादृश्यसम्पत्तिरविकला हरणादेव जायत इति अविकलाहरणं प्रकाशयितुमेव सादृश्यानुवादो दृष्टार्थत्वात्। इतरथा श्येनाकारताया मान्त्रवर्णिकत्वा विधाने गौरव मदृष्टार्थता चापद्येत। एवं "शलादापर्णोकश्यपे यावौ कवषोरुस्तेक पर्णाष्ठीवन्तइत्यादि"ष्वपि द्रष्टव्यम्। शला शलाकि कश्यप च कच्छपा विव कवषा गतिसाधनाश्वादियामसदृशो स्तेकपर्णाकरवीरपर्णा कृतो ष्ठीवन्तौ अस्थिमयुक्तौ। अत्र च पूर्व्वपक्ष सिद्धान्त प श्येना दीनामुपमानत्वस्याऽवश्यकत्वात् तत्रापि चेवशब्दश्रवणेन सिद्धा देव दत्त इतिवद्गौणत्वाभावात् सिंह इव ते वीरा इतिवदसौविहद्वौ चनुाहृतश्येनपदनैवोपमानमिश्वमुष्ट एव श्येनादिपदानां न्याय

का चित् क्षतिः। यथा "अत्रह्येवाऽवपन्तो"त्यादौ। प्रकृते तु एवकार-सम्बन्धिनोऽध्रिगुप्रैषस्याऽविधेयत्वाच्च चतुस्त्रिंशदित्येव निषेधविधिः। शास्त्रप्राप्तस्य निषेधाच्च "न तौ पशौ करोती"तिवद्विकल्प। षड्विंशतिरित्येवेत्ययं अकरणपक्षे न्यायप्राप्तानुवादः सत्प्रकरणप्रशंसया करणस्यैव निन्दार्थवादः। एवञ्च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति। विकल्पस्तु बहुवचनान्तपाशमन्त्रवच्च विरुध्यते।

नन्वेवमध्रिगुप्रैषस्य विधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्रा-ख्यात्यनिवृत्तिरूपस्य विधेयत्वोपपत्ते"र्न चतुस्त्रिंशदि"त्यस्यैवाऽनुवादत्वं किं न स्यादिति वाच्यं एवमपि शास्त्रप्राप्तनिवृत्तेरविशेषेण विकल्प-स्याऽपरिहार्यत्वात्। अतएवा"त्रह्येवाऽवपन्तो"त्यादावप्राप्तपरि-सङ्ख्यैवा"न्योक्तता कौस्तुभे। तत्परत्वकारस्य तु तत्रैवकारार्थविधि-मङ्गीकुर्वतस्तत्र विकल्पापत्तिस्तद्वदेव चेह तदनापत्तिरित्यय पर्यनु-योगो दुरुद्धरो न तु मम। न च तथाऽपि विनिगमनाविरहतात्-वश्यम् एवकारस्याऽयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानार्थकतया सन्दिग्धार्थकत्वेन निःसन्दिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात्।

अत.सिद्धोऽन्तमेषेऽप्यध्रिगावूहः।

अत्र च सूत्रव्याख्यानुरोधेन किञ्चिद्वैलक्षण्येन च भाष्यकारैर्वा-धिकरणं वार्त्तिककारैर्वाऽधिकरणद्वयमाश्रितं तत्प्रमेयमात्र-लिखनप्रवृत्तेन मयोपेक्षितम्। ८। ४। २।

॥ वनिष्ठु ॥ अध्रिगुप्रैष एव "वनिष्ठुमस्य माराविष्टोरुकं मन्य-माना" इति श्रुतं तत्रोरुकपदेन किं उलूकस्याऽभिधानं किंवा वपाया इति चिन्तायां वपायासुरुकशब्दप्रयोगाभावादन्यत्र वेदे लकारस्थाने

असिवत्तुल्यस्य विधानात् तदनुरोधेनोह इति यास भाष्यकारादिभिरेव समाहितं प्रत्यक्षविहितस्वधितिमन्त्रं मान्त्रवर्णिकग्रामविधिकल्पनाया गौरवात् प्रशसापदं प्रशस्तत्वपरमेवेति ननु स्वयमेव "इम पयाजानिष्टाग्राममाहरे"ति वाक्यस्य लिखितत्वाच्छासस्याऽपि पशौ विहितत्वेनोपेक्षितम ।

वस्तुतस्तु आश्वायनादिसकलकल्पपर्यालोचनया ग्रामपदस्य स्वधितावपि शक्त्यगमाद्दाहुच्छेदनेऽपि स्वधितेरेव प्रसक्तेर्न मान्त्रवर्णिकद्रव्यान्तरकल्पना । यत्तु "असि वैशसमावदान" इति लिङ्ग तत् स्वधितेरव असितुल्यत्वेन स्तुत्यर्थ असिशब्दस्य निर्देशो स्वधितिपर्यायत्वेन पाठाद्वा ग्रामशब्दस्य स्वधितिपर्यायत्वसूचनार्थ न विरुध्यते । अतश्च ग्रामस्य बाहुच्छेदने करणत्वमस्त्यपि प्रशसेतिपदेन न तदभिधानं तकारस्याल्लोपस्य बाहुलकत्वे सम्भवति अकारलोपस्य ङसश्च बाहुलकत्वाङ्गीकारे प्रमाणाभावात् द्वितीयाद्विवचनान्तत्वाङ्गीकारेण बाहुभ्यामानाधिकरण्ये सम्भवति वैयधिकरण्यस्याऽन्याय्यत्वाच्च । द्विवचनस्याऽकारादेशस्तु स्वतन्त्रतदविधानत इति न तस्य बाहुलकत्वं एवञ्च शनाद्दीपशीत्यादिमाययपाठोऽपि सङ्गच्छते । अतश्च प्रशसा पदेन प्रशस्तत्वाभिधानात् तस्य चाऽविकलत्वसूचनार्थतयाऽदृष्टार्थत्वाद्दाहुविशिष्टावूह । तथाऽपि प्राकृतपदस्य बाहुद्वये छान्दसत्वाद्बाहुबहुत्वे द्विपाशकार्या विकृतौ बहुवचनान्तपाशमन्त्रस्यैवाऽप्रवृत्ते स्वाधीने शब्दार्थयोरन्याय्येन प्रशस्तान बाहूनित्यूह । पर्श्वपक्षे च प्रशासैरिति द्रष्टव्यम ।

इदञ्च महाभाष्यप्रारम्भात् कान्ताधातोरिव भान्ताधातोरपिसुम्न

भिन्न कल्पसूत्रकारमतमसमर्थेति यत्रापोद्मधिकरणे नोहविचारोप-
योगि तथाऽपि प्रासङ्गिकत्वान्न दोषः ।८।४।५।

॥ प्रासङ्गिके ॥ अग्निहोत्रे "अग्नये ज्योतिष्मते पुरोडाशमष्टा-
कपालं निर्वपेद्यस्याग्निरुद्धृतो हुतेऽग्निहोत्रे उद्वायेदि"ति श्रुतं तत्र
किमिदं प्रायश्चित्तं दर्शाद्यर्थप्रणीतस्याऽग्नेरग्निहोत्रकाले उद्वाने
भवति नेति चिन्तायां—

यच्छब्दसमभिव्याहृतेन लिङा यदन्तुल्या निमित्तत्वमुद्वानस्य
प्रतीयते। न च तदुद्वानमात्रस्य नाशापरपर्य्यायस्य सम्भवति यत्
किञ्चिन्नाशस्य सर्व्वदासत्त्वेन कादाचित्कत्वाभावान्निमित्तस्या-
सम्भवात्। अतो हविरार्त्तिन्यायेन प्रतियोगितासम्बन्धेनाऽग्नि-
र्विशेषणं। तथाऽपि चाग्नेरवयवशोनाशस्य सर्व्वदा सत्त्वादग्नि-
त्वावच्छिन्नजगतीतलवर्त्तिसर्व्वाग्निनाशस्य च कदाप्यसम्भवा-
द्यस्यं करिष्यमाणाग्निहोत्रप्रयोगोपयोग्यग्नित्वावच्छिन्नप्रतियोगि-
ताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायादुक्तप्रयोगोपयोग्य-
वयविनाश एवेदं प्रायश्चित्तमग्नीषोमीयादिहोमादावपि सम्भव एव।
प्रकृतप्रयोगोपयोगिकपालनाशस्यैव निमित्तत्वात् अतस्तद्देवेदं
मारादुपकारकं अग्निहोत्राङ्गम्।

अस्तु वा नष्टस्याग्नेरुत्पादकाद्वाया वैमृधन्यायेन पदान्तर
कल्पनयाऽस्याग्निहोत्रापेक्षिताद्दृष्टरूपाग्न्युत्पादकत्वकल्पनया सन्नि-
पत्योपकारकत्वमेव। वैदनहोमस्य दृष्टरूपकपालजनकत्वस्य
साधितत्वादारादुपकारकत्वमिति विशेषः। अस्मत्पक्षेऽन्युत्पादन-
प्रयोजनाभावादग्निहोत्रे हुते एतत्प्रायश्चित्तस्याऽपर्य्यापत्तेः अहुतेऽग्नि-